# वातुलशुद्धागमः

व्याख्यासमलङ्कृतः

द्वितीयो भागः

*Edited by* :

Vidwan Dr. H. P. MALLEDEVARU, M.A., Ph.D.




ORIENTAL RESEARCH INSTITUTE, MYSORE
1983

# वातुलशुद्धागमः

व्याख्यासमलङ्कृतः

द्वितीयो भागः

---

*Edited by*:

Vidwan Dr. H. P. MALLEDEVARU, M.A., Ph.D.




ORIENTAL RESEARCH INSTITUTE, MYSORE
1983

*Pric*· s. 23–00

UNIVERSITY OF MYSORE
ORIENTAL RESEARCH INSTITUTE SERIES–No. 138

# VĀTULAŚUDDHĀGAMA

## (With Sanskrit Commentary)

### Second Volume

*Critically Edited by*

Vidwan Dr. H. P. MALLEDEVARU, M.A., Ph.D., Dip-In-Ind.

DIRECTOR :

Oriental Research Institute and Professor and Head of the Department of Post-Graduate Studies and Research in Sanskrit
Manasagangotri, University of Mysore, Mysore

*Assistant Editors :*

Vidwan R. RAMA SHASTRI
Vidwan H. K. SIDDHAGANGAIAH
Vidwan N. S. VENKATANATHACHAR

*ORIENTAL RESEARCH INSTITUTE*
University of Mysore, Mysore
1983

प्राच्यविद्यासंशोधनालयग्रन्थमालाङ्कः-१२८

# वातुलशुद्धागमः

## व्याख्यानसमलङ्कृतः

(द्वितीयो भागः)



सम्पादकः

विद्वान् डा॥ हेच्. पि. मल्लेदेवरु, एम्. ए. पिहेच्. डि.

निर्देशकः प्राच्यविद्यासंशोधनालयः, तथा

प्राध्यापकः, अध्यक्षश्च स्नातकोत्तरसंस्कृताध्ययनसंशोधनविभागः

मानसगङ्गोत्री, मैसूरुविश्वविद्यानिलयः, मैसूरु

सहायकसम्पादकाः

विद्वान् आर्. रामशास्त्री

विद्वान् हेच्. के. सिद्धगङ्गय्यः

विद्वान् एन्. एस्. वेङ्कटनाथाचार्यः

प्राच्यविद्यासंशोधनालयः

मैसूरुविश्वविद्यानिलयः, मैसूरु

१९८३

# अनुक्रमणिका

—o—


1 PREFACE

2 विषयानुक्रमणिका

3 वातुलशुद्धागमः (सव्याख्यः) ७, ८, ९, १० पटलाः

4 अनुबन्धाः—

तत्र सर्वप्रायश्चित्तपटलः

5 पुण्याहविधिः

6 पञ्चगव्यविधिः

7 चर्यापादः

8 शिवोत्सवविधिः

9 शिवलिङ्गप्रतिष्ठाविधिः

10 एकरात्रविधानम्

11 त्रिरात्रकर्मविधानम्

12 पञ्चरात्रविधिः

13 सप्तरात्रविधिः

14 नवरात्ररथोत्सवकर्मविवृतिविधानम्

15 वातुलशुद्धागमद्वितीयभागस्थविषयाणां अकाराद्यनुक्रमः

16 श्लोकार्धानामकाराद्यनुक्रमणिका


-- o—

# PREFACE

—o—

It is a matter of pleasure to place the second volume of Vatulasuddhagama in the hands of scholars. The publication of this critical edition, it is hoped, would fill a vacuum which was felt by those working in the field of Indian religion and philosophy.

The present volume is critically edited with the help of sixteen manuscripts. A chart giving the details of the manuscripts is given in this book stating the name of the manuscript, abbreviation given to it for the sake of readings, the place of acquisition, accession number, the script in which the manuscript is written, the nature of the material etc. The sixteen manuscripts were collected from different places of India like Madras, Pondicherry, Bagalkot, Hubli, Dharwar, Mysore and so on.

Among the sixteen Manuscripts mentioned above, only in three Manuscripts, an old Sanskrit Commentary on the text is available, that too only for 1/10th of the text. Hence a comprehensive Sanskrit Commentary has been now written afresh for the entire text and presented here for easy and clear understanding of the original text. However, the said Sanskrit Commentary is not written to the portion from stanza number 24 (page 54) to stanza number 38 (page 61) since the wordings in that portion of the original text are not clear and the mantrasastra tradition is wanting. In fact, this portion is

left uncommented even in an available Kannada commentary by Amaragunda Mallikarjuna on the original text, probably because the tradition was lost long back.

In the larger portion (of the original text) where the old Sanskrit Commentary is not available, the unpublished Kannada Commentary is made use of while writing afresh the Sanskrit Commentary. On the whole, an earnest attempt has been made to provide a lucid and brief Sanskrit Commentary for the full text. Other details have been explained in the exhaustive Introduction to the first volume.

It is my pleasant duty now to acknowledge the help of various scholars in the preparation of this text. Vidwan R. Rama Shastri, Retired Senior Research Assistant, Oriental Research Institute, Vidwan H. K. Siddagangaiah, Retired Sanskrit Pandit, Government Training College, Mysore, and Vidwan N. S. Venkatanathachar, Senior Research Assistant, Oriental Research Institute, have rendered service with their valuable assistance in critically editing the text, along with Sanskrit Commentary.

Vidwan K. M. Rajashekaraiah, Retired Professor, Maharaja's Sanskrit College, Mysore had joined this project and worked for a few months, but death snatched him away unexpectedly. With deep regrets, I have to add that after the text of this book was printed and before this preface went to press, Vidwan R. Ramashastry passed away on 5–3–1983 due to a sudden heart attack. We owe a deep debt of gratitude to the departed souls.

We are very much indebted to the athorities of the University Grants Commission for financial aid granted to this project. Only owing to their munificent aid, these critically edited volumes have come to light.

We are grateful to Prof. K. S. Hegde, Vice-Chancellor and Shri N. R. Venkatesh, I.A.S., Registrar and to the other authorities of the University of Mysore for their continuous encouragement.

The Karunodaya Printing Press, Mysore, deserves our thanks for the neat and quick printing of this volume. We are happy to state that the Oriental Research Institute, Mysore, has been publishing critical editions of Vedic and classical Sanskrit texts on various subjects and the pace of publishing has been accelerated in the recent past.

We hope that this critical edition of Vatula-suddhagama will be received with utmost delight by all those scholars interested in Sanskrit studies.

H. P. MALLEDEVARU
*Director, O.R.I. Mysore*

# CHART OF THE MANUSCRIPTS

| Sl No. | Name of the Mss/or Printed book | Abbre-viation | The place of Acquision |
|---|---|---|---|
| 1 | Vatulagama (With Kannada Commentary) | क | |
| 2 | Vatulasuddhakhyatantram (With Kannada Commentary) | ख | Hubli Publications (Dharwar) |
| 3 | Agamarahasyam (Vatulasuddhakhyam) | ग | Agamika Krishna Dikshita |
| 4 | Vatulasuddhakhyam (With Kannada Commentary) | घ | J.K.S. (Kannada Adyayana Samsta) |
| 5 | Agamarahasyam (Vatulasuddhakhyam) | च | Sri Agamik Sundara Dikshita |
| 6 | Vatulagamah (With Kannada Commentary) | छ | |
| 7 | Vatulasuddhakhyam (With Commentary) | ज | Shivajnana-bodha Press, Madras |
| 8 | Vatulasuddhakhyam (Only Original) | झ | ,, |
| 9 | Vatulagamah (With Kannada Commentary) | ट | O.R.I. Mysore |

## UTILISED WITH DETAILS

| Acc. No. | Script | Material | Whether Printed |
|---|---|---|---|
| | Kannada | Paper | No |
| 6 | ,, | ,, | Printed |
| | Devanagari (Samskrita) | ,, | ,, |
| K. 1149/1–2 | Kannada | Palmleaf | No |
| | Telugu | | Printed |
| 1323 | Kannada | Palmleaf | No |
| | Grantha | | Printed |
| | ,, | ,, | ,, |
| 7361–62 | Kannada | Palmleaf | No |

| Sl. No. | Name of the Mss/or Printed book | Abbre-viation | The place of Acquision |
|---|---|---|---|
| 10 | Vatulatantram (Sivayogipradipikatika) (With Kannada Commentary) | ठ | O.R.I. Mysore |
| 11 | Vatulasuddhakhyatantram | ड | ,, |
| 12 | Vatulatantram (With Kannada Commentary) | ढ | ,, |
| 13 | Vatulagamah (With Kannada Commentary) | त | ,, |
| 14 | Vatulagamah (With Kannada Commentary) | थ | ,, |
| 15 | Vatulasuddhakhyatantram (With Kannada Commentary) | द | J.K.S. (Kannada Adyayana Samsta) |
| 16 | Vatulatantram | ध | Copied from D.O.M.L. |
| 17 | Vatulagamah | प | O.R.I. Mysore |
| 18 | Vatulagamah | फ | ,, |
| 19 | Vatulagamah | ब | ,, |
| 20 | Vatulagamah (With Commentary) | भ | ,, |
| 21 | Vatulagamah | य | ,, |

| Acc. No. | Script | Material | Whether Printed |
|---|---|---|---|
| 8901–3 | Kannada | Palmleaf | No |
| 36 | Grantha | ,, | No |
| 7345–50 | Kannada | ,, | ,, |
| 5088 | ,, | ,, | ,, |
| 5078 | Nandi Nagari | Palmleaf | ,, |
| K. 1145/1–4 | Kannada | ,, | ,, |
| D. 5477 | Is written Devanagari (Samskrita) | Paper | ,, |
| S.B. 1132 | Devanagari (Samskrita) | Paper | ,, |
| 4151 | Grantha | Palmleaf | ,, |
| 924 | Kannada | ,, | ,, |
| 3720 | Grantha | ,, | ,, |
| 4045 | ,, | ,, | ,, |

# वातुलशुद्धागम-द्वितीयभागस्य विषयानुक्रमणिका

—०—

## ब्रह्मभेदः सप्तमः पटलः


| क्रमाङ्कः | विषयाः | | श्लोकसंख्या | पु. |
|---|---|---|---|---|
| 1 | पटलार्थसूचनपूर्वकं मङ्गलाचरणम् | ... | 1 | 1 |
| 2 | ब्रह्मपदार्थः | ... | 2 | 2 |
| 3 | ब्रह्मविभागः (पञ्चधा) | ... | 3–4 | 3 |
| 4 | विभक्तानां नामानि | ... | 5–6 | 4 |
| 5 | तत्र प्रथमस्य मूर्तिब्रह्मणो लक्षणम् | ... | 6–8 | 5 |
| 6 | द्वितीयस्य तत्त्वब्रह्मणो लक्षणम् | ... | 8–9 | 5 |
| 7 | तृतीयस्य भूतब्रह्मणो लक्षणम् | ... | 10–12 | 6 |
| 8 | चतुर्थस्य पिण्डब्रह्मणो लक्षणम् | ... | 13–14 | 8 |
| 9 | पिण्डब्रह्मणां पञ्चानां नामानि | ... | 15–16 | 9 |
| 10 | पञ्चपिण्डब्रह्ममन्त्रोद्धारक्रमः | ... | 17 | 10 |
| 11 | पिण्डब्रह्मस्वरूपनिगमनम् | ... | 18 | 11 |
| 12 | पञ्चमस्य कलाब्रह्मणो लक्षणम्, विभागश्च | ... | 19 | 11 |
| 13 | ब्रह्मभेदेन कलासङ्ख्याः | ... | 20–21 | 12 |
| 14 | तत्र–पञ्चविधेशानमन्त्रकलाः | ... | 21–24 | 13 |
| 15 | चतुर्विधतत्पुरुषमन्त्रकलाः | ... | 24–26 | 14 |
| 16 | अष्टविधाघोरमन्त्रकलाः | ... | 26–28 | 15 |
| 17 | त्रयोदशविधवामदेवमन्त्रकलाः | ... | 29–32 | 16 |
| 18 | अष्टविधसद्योजातमन्त्रकलाः | ... | 33–35 | 18 |
| 19 | कलाब्रह्मलक्षणनिगमनम् | ... | 36–37 | 20 |
| 20 | मूर्त्यादिस्वरूपविशेषकथनारम्भः | ... | 37 | 21 |

| क्रमाङ्कः | विषयाः | | श्लोकसंख्या | पु. |
|---|---|---|---|---|
| 21 | पञ्चमूर्तीनां पञ्चप्रणवस्वरूपता | ... | 38 | 22 |
| 22 | सद्योजातादिषु पञ्चसादाख्यतत्त्वभावनाविधिः | ... | 39–40 | 22 |
| 23 | पञ्चमूर्तिषु आत्मप्रासादादिमन्त्रभावनाविधिः | ... | 40 | 23 |
| 24 | सद्योजातादिषु पञ्चभूतस्वरूपभावनाविधिः | ... | 41–42 | 23 |
| 25 | तत्र सद्योजातस्वरूपम् | ... | 42–45 | 24 |
| 26 | वामदेवस्वरूपम् | ... | 45–50 | 25 |
| 27 | अघोरस्वरूपम् | ... | 50–56 | 26 |
| 28 | तत्पुरुषस्वरूपम् | ... | 56–59 | 29 |
| 29 | ईशानस्वरूपम् | ... | 60–63 | 30 |
| 30 | तेषु सौम्यासौम्य-मूर्तामूर्तादिविभागः | ... | 64–66 | 31 |
| 31 | कलाब्रह्मणां वर्णनिरूपणारम्भः | ... | 66 | 32 |
| 32 | ईशानकलावर्णाः | ... | 67 | 33 |
| 33 | तत्पुरुषकलावर्णाः | ... | 68 | 33 |
| 34 | अघोरकलावर्णाः | ... | 68–69 | 33 |
| 35 | वामदेवकलावर्णाः | ... | 69–70 | 34 |
| 36 | सद्योजातकलावर्णाः | ... | 71 | 35 |
| 37 | सर्वकलामूर्तिसाधारणं रूपम् | ... | 72–73 | 35 |
| 38 | सर्वकलासाधारणाः शक्तयः | ... | 74 | 36 |
| 39 | सकलीकरणविधिः, पटलार्थनिगमनं च | ... | 75–76 | 36 |


अङ्गभेदः अष्टमः पटलः


| | | | | |
|---|---|---|---|---|
| 40 | पटलार्थसूचनपूर्वकं मङ्गलाचरणम् | ... | 1 | 38 |
| 41 | अङ्गविभागः | ... | 2–3 | 39 |
| 42 | अङ्गानां नामानि | ... | 4–5 | 40 |
| 43 | अङ्गानां क्रमनिर्णयः | ... | 6–7 | 41 |

| क्रमाङ्कः | विषयाः | | श्लोकसंख्या | पृ. |
|---|---|---|---|---|
| 44 | तत्र प्रथमस्य शिवाङ्गस्य निरूपणम् | ... | 7–9 | 41 |
| 45 | शिवाङ्गस्य षोढा विभागः | ... | 9–11 | 42 |
| 46 | तेषां सिद्धिक्रमः | ... | 12 | 44 |
| 47 | तत्र हृन्मन्त्रपल्लवम् | ... | 1 | 45 |
| 48 | शिरोमन्त्रपल्लवम् | ... | 2 | 45 |
| 49 | शिखामन्त्रपल्लवम् | ... | 3 | 46 |
| 50 | कवचमन्त्रपल्लवम् | ... | 4 | 46 |
| 51 | नेत्रमन्त्रपल्लवम् | ... | 5 | 47 |
| 52 | अस्त्रमन्त्रपल्लवम् | ... | 6] | 47 |
| 53 | मन्त्रे हृदयादिविभागक्रमः | ... | 13 | 48 |
| 54 | द्वितीयस्य भूताङ्गस्य निरूपणम् | ... | 14 | 49 |
| 55 | तत्र प्रथमं बीजम् | ... | 15 | 49 |
| 56 | द्वितीयं बीजम् | ... | 16 | 50 |
| 57 | तृतीयं बीजम् | ... | 17 | 50 |
| 58 | चतुर्थं बीजम् | ... | 18 | 51 |
| 59 | पञ्चमं बीजम् | ... | 19 | 51 |
| 60 | षष्ठं बीजम् | ... | 20 | 52 |
| 61 | भूताङ्गस्थानम् | ... | 21 | 52 |
| 62 | तृतीयस्य कूटाङ्गस्य निरूपणम् | ... | 21–22 | 53 |
| 63 | चतुर्थस्य विद्याङ्गस्य निरूपणम् | ... | 23–38 | 54 |
| 64 | विद्याङ्गभूतानामस्त्राणां निरूपणम् | ... | ... | ... |
| 65 | तत्र षोढा अस्त्रविभागः | ... | 39 | 62 |
| 66 | तत्र शिवास्त्रम् | ... | 40–42 | 62 |
| 67 | पाशुपतास्त्रम् | ... | 43–44 | 63 |
| 68 | ब्रह्मास्त्रम् | ... | 45–47 | 64 |

| क्रमाङ्कः | विषयाः | | श्लोकसंख्या | पु. |
|---|---|---|---|---|
| 69 | क्षुरिकास्त्रम् | ... | 48-50 | 65 |
| 70 | व्योमास्त्रम् | ... | 51-54 | 66 |
| 71 | अघोरास्त्रम् | ... | 54-58 | 67 |
| 72 | षड्बीजयुतस्य पञ्चमस्य शक्त्यङ्गस्य निरूपणम् | ... | 58-64 | 68 |
| 73 | षष्ठस्य सामान्याङ्गस्य निरूपणम् | ... | 65-69 | 72 |
| 74 | प्रथमस्य शिवाङ्गस्य वर्णनिरूपणम् | ... | 70-72 | 74 |
| 75 | द्वितीयस्य भूताङ्गस्य वर्णनिरूपणम् | ... | 72-73 | 76 |
| 76 | तृतीयस्य कूटाङ्गस्य वर्णनिरूपणम् | ... | 74 | 76 |
| 77 | चतुर्थस्य विद्याङ्गस्य वर्णनिरूपणम् | ... | 75 | 77 |
| 78 | पञ्चमस्य शक्त्यङ्गस्य वर्णनिरूपणम् | ... | 75-76 | 77 |
| 79 | षष्ठस्य सामान्याङ्गस्य वर्णनिरूपणम् | ... | 77 | 78 |
| 80 | तत्र ध्यानार्हं स्वरूपम्, तद्विभागश्च | ... | 78 | 79 |
| 81 | शिवाङ्गविनियोगः | ... | 81 | 80 |
| 82 | भूताङ्गविनियोगः | ... | 81-82 | 80 |
| 83 | कूटाङ्गविद्याङ्गयोः विनियोगः | ... | 82 | 81 |
| 84 | शक्त्यङ्गविनियोगः | ... | 83 | 81 |
| 85 | सामान्याङ्गविनियोगः | ... | 83 | 81 |
| 86 | हृदयमन्त्रविभागः | ... | 84 | 81 |
| 87 | तत्र केवलहृदयम् | ... | 85 | 82 |
| 88 | ज्ञानजहृदयम् | ... | 86 | 82 |
| 89 | योगजहृदयम् | ... | 87 | 82 |
| 90 | भूतजहृदयम् | ... | 88 | 83 |
| 91 | कामजहृदयम् | ... | 89 | 83 |
| 92 | केवलहृदयरूपम् | ... | 90 | 84 |
| 93 | ज्ञानजहृदयरूपम् | ... | 91 | 84 |

| क्रमाङ्कः | विषयाः | | श्लोकसंख्या | पु. |
|---|---|---|---|---|
| 94 | योगजहृदयरूपम् | ... | 91 | 84 |
| 95 | भूतजहृदयरूपम् | ... | 92 | 85 |
| 96 | कामजहृदयरूपम् | ... | 92 | 85 |
| 97 | केवलहृदयादिविनियोगः | ... | 93–94 | 85 |
| 98 | अस्त्रमन्त्रभेदाः | ... | 94–95 | 86 |
| 99 | अस्त्रमन्त्राणां अक्षरसंख्याः | ... | 96–97 | 86 |
| 100 | अस्त्रमन्त्रज्ञानावश्यकता | ... | 97 | 87 |
| 101 | पटलार्थनिगमनम् | ... | 98 | 88 |

मन्त्रजातपटलः नवमः

| | | | | |
|---|---|---|---|---|
| 102 | पटलार्थसूचनपूर्वकं मङ्गलम् | ... | 1 | 89 |
| 103 | (लिङ्गस्वरूप) मन्त्रजातनिरूपणप्रतिज्ञा | ... | 2–3 | 90 |
| 104 | तत्प्रयोजनकथनम् | ... | 3–4 | 90 |
| 105 | मन्त्रमयलिङ्गोद्धरणक्रमः | ... | 4–14 | 91 |
| 106 | लिङ्गपीठस्वरूपम् | ... | 14 | 95 |
| 107 | लिङ्गपीठषडङ्गानि | ... | 15 | 96 |
| 108 | लिङ्गे षडङ्गमन्त्राणां विन्यासविधिः | ... | 16 | 97 |
| 109 | विन्यासक्रमः | ... | 17 | 97 |
| 110 | आधारादिषट्चक्रेषु शिवबीजाक्षरन्यासविधिः | ... | 18–21 | 97 |
| 111 | तत्रैव शक्तिचक्रन्यासविधिः | ... | 22 | 101 |
| 112 | उक्तशिव-शक्तिचक्रयोः वर्णाधिदेवतापरिकल्पनविधिः | | 23 | 102 |
| 113 | सूक्ष्मपञ्चाक्षरन्यासविधिः | ... | 24–25 | 102 |
| 114 | स्थूलपञ्चाक्षरन्यासविधिः | ... | 26 | 104 |
| 115 | षडक्षरन्यासविधिः | ... | 27–28 | 104 |
| 116 | भुवनादिषडध्वन्यासविधिः | ... | 29–30 | 105 |

| क्रमाङ्कः | विषयाः | | श्लोकसंख्या | पु. |
|---|---|---|---|---|
| 117 | एवं लिङ्गस्य मन्त्रमयत्वसिद्धिकथनम् | ... | 31–33 | 106 |
| 118 | एकोनविंशतिमन्त्राभिधानानि | ... | 34–36 | 107 |
| 119 | तत्र अतिबालसबालयोः स्वरूपम् | ... | 37 | 709 |
| 120 | कौमारयौवनयोः स्वरूपम् | ... | 38 | 110 |
| 121 | ब्राह्मणादिस्वरूपम् | ... | 39 | 110 |
| 122 | स्त्रीपुंमन्त्रस्वरूपम् | ... | 40 | 111 |
| 123 | नपुंसकमन्त्रस्वरूपम् | ... | 41 | 111 |
| 124 | मन्त्रेषु विप्रादिलक्षणम् | ... | 41–42 | 111 |
| 125 | स्थानस्वरूपम् | ... | 42 | 111 |
| 126 | शुद्धमिश्रसङ्कीर्णानां स्वरूपम् | ... | 43 | 112 |
| 127 | मन्त्राणां पुरुषरूपत्ववर्णनम् | ... | 44–47 | 112 |
| 128 | मन्त्राणां वासवाहने | ... | 48–52 | 114 |
| 129 | शिवस्यैव सर्वावासत्वदृढीकरणम् | ... | 52–65 | 117 |
| 130 | शिवस्यैव सर्वविद्याप्रतिपाद्यत्वम् | ... | 65–68 | 119 |
| 131 | सर्वविद्याप्रतिपाद्यं अद्भुतं शिवस्वरूपम् | ... | 69–71 | 120 |
| 132 | तादृशशिवसाक्षात्कारयोग्यतावर्णनम् | ... | 71–74 | 121 |
| 133 | तस्यैव सर्वदेवतामूलशिवस्वरूपत्वम् | ... | 75 | 122 |
| 134 | तस्मात् महेश्वर–जगद्गुरु–ब्रह्मणामुत्पत्तिः | ... | 76–77 | 122 |
| 135 | तस्यैव मायाश्रयत्वम् | ... | 78–79 | 122 |
| 136 | मन्त्रवाहननिरूपणम् | ... | 80 | 123 |
| 137 | मन्त्रलक्षणप्रकरणनिगमनम् | ... | 81 | 123 |


मन्त्रकीलपटलः दशमः


| | | | | |
|---|---|---|---|---|
| 138 | पटलार्थसूचनपूर्वकं मङ्गलाचरणम् | ... | 1–2 | 124 |
| 139 | पटलारम्भप्रतिज्ञा ग्राह्यत्याज्यमन्त्रविभागश्च | ... | 3 | 125 |

| क्रमाङ्कः | विषयाः | | श्लोकसंख्या | पु. |
|---|---|---|---|---|
| 140 | मन्त्रोच्चारणविधिः | ... | 4 | 126 |
| 141 | मन्त्राणां अनुकूलप्रतिकूलस्वरूपे | ... | 5–7 | 126 |
| 142 | भक्तिस्थानानि | ... | 7 | 127 |
| 143 | शिवे आत्मात्मीयसमर्पणविधिः | ... | 8–9 | 127 |
| 144 | शिवद्रोहाणां परिगणनम् | ... | 9–10 | 128 |
| 145 | शैवभेदाः | ... | 10–11 | 128 |
| 146 | तत्र प्रथमस्य सामान्यशैवस्य लक्षणम् | ... | 11–14 | 128 |
| 147 | द्वितीयस्य मिश्रशैवस्य लक्षणम् | ... | 14–16 | 130 |
| 148 | तृतीयस्य शुद्धशैवस्य लक्षणम् | ... | 17 | 131 |
| 149 | तस्य आत्मार्थ-परार्थेतिद्विविधलिङ्गपूजाविधिः | ... | 21–24 | 133 |
| 150 | तेन शिवावरणादन्यत्रस्थितिदेवतान्तरपूजादिनिषेधः | | 25–27 | 135 |
| 151 | चतुर्थस्य वीरशैवस्य निरूपणारम्भः | ... | 28–29 | 136 |
| 152 | वीरशैवपदार्थः | ... | 30–32 | 138 |
| 153 | वीरशैवस्य त्रिधा विभागः | ... | 33 | 139 |
| 154 | तत्र सामान्यवीरशैवलक्षणम् | ... | 34 | 139 |
| 155 | तस्य लिङ्गधारणस्थानानि | ... | 36 | 140 |
| 156 | तस्य निष्ठाविशेषाः | ... | 37 | 140 |
| 157 | विशेषवीरशैवलक्षणम् तस्य निष्ठाविशेषाश्च | ... | 38–45 | 140 |
| 158 | निराभारवीरशैवलक्षणम्, तस्य निष्ठाविशेषाश्च | ... | 46–48 | 143 |
| 159 | वीरशैवानां सर्वेषामपि सामान्यविधयः तेषां विशिष्टाः निष्ठाश्च | ... | 49–57 | 144 |
| 160 | शुद्धशैवानां विशेषधर्माः | ... | 57–60 | 147 |
| 161 | शैवानां चातुर्विध्यनिगमनेन ग्रन्थार्थनिगमनम् | ... | 61–63 | 148 |


—o—

॥ श्रीः ॥

॥ शुभमस्तु ॥

॥ नमः शिवाभ्याम् ॥

# ॥ श्री वातुलशुद्धागमः ॥

व्याख्यानसमलङ्कृतः



अथ ब्रह्मभेदो नाम

## सप्तमः पटलः

[पटलार्थसूचनपूर्वकं मङ्गलाचरणम्]

[1] येनेदं[2] परया विभक्त[3]मखिलं पञ्चाशदर्णं[4] महः[5]

---

व्याख्यानम्

(मूर्तादिक-कलान्तं यत् ब्रह्म तत् पञ्चधा स्मृतम् ।
पञ्चविंशतिरूपं तत् व्यापकं ब्रह्मशब्दितम् ॥
अष्टत्रिंशत्कलोपेतं सद्योजातादिरूपकम् ।
वामादिशक्तिसम्पन्नं ब्रह्मरूपं शिवं भजे ॥

---

1. पद्यमिदं–ख. झ. पुस्तकयोः न दृश्यते ।
2. एवेदं–ध. पलवेदं–क.
3. विभक्ति–घ. द.
4. पञ्चाशदर्धं–घ. छ. थ. पञ्चाशदर्थं-क. ट. त. द. पञ्चादशार्णं–ग. च
5. महत्–घ. छ. ट. महात्–क. ठ. ढ. त. थ. द. प.

ब्रह्माख्यं निजभूतमेतदखिलं[1] विश्वाधिकं[2] राजते[3] ।
क्षेत्रज्ञादिसमस्तवर्णजनितं वाग्ब्रह्म श्रुत्यादिकं[4]
विश्वोत्पत्तिविनाशसंस्थितिकृते[5] तस्मै नमो ब्रह्मणे ॥ १ ॥

[ब्रह्मपदार्थः]

अथ वक्ष्ये विशेषेण ब्रह्मभेदविधिं परम् ।

---

**येन** ब्रह्माभिधपरशिवेन इदं अनुभूयमानं अखिलं समस्तं **महः** तेजोरूपं **पञ्चाशदर्णं** अकारादि पञ्चाशदक्षरजातम्, परया पराशक्त्या, **विभक्तं** विभागेन व्यक्तीकृतम्; येन पूर्वोक्तशिवेन निजभूतं स्वात्मभूतं **ब्रह्माख्यं** मूर्तिब्रह्मादिपञ्चब्रह्मात्मकं एतदखिलं समस्तमिदं **विश्वाधिकं** प्रपञ्चोत्कृष्टं **राजते** प्रकाशते; येन पूर्वोक्तशिवेन **क्षेत्रज्ञादिसमस्तवर्णजनितं** जीवाख्य-अकारादिपञ्चादशदक्षरसम्भूतम्, **श्रुत्यादिकं** श्रुतिप्रभृति समस्तम्, **वाग्ब्रह्म** शब्दब्रह्मरूपं वाग्जालं; 'राजते' इत्यनुषज्यते । **विश्वोत्पत्ति-विनाश-संस्थितिकृते** प्रपञ्चोत्पत्ति-लय-स्थितिकर्त्रे **तस्मै ब्रह्मणे** तादृशपरशिव-ब्रह्मणे **नमः** नमस्कारः; क्रियते इति शेषः ॥ १ ॥)

**अथ** प्रणवभेदनिरूपणानन्तरम् **परं** उत्कृष्टम् **ब्रह्मभेदविधिं** ब्रह्मणो भेदविधिम्, **विशेषेण** विशेषतः **वक्ष्ये** कथयामि । **बृहत्त्वात्** महत्त्वात् **बृंहणत्वाच्च** समस्तकलापरिपूर्णत्वाच्च **ब्रह्मेति परिकीर्तितं** कथितम् ॥ २ ॥

---

1. निजया तदेतदमितं—क. घ. छ. ठ. ढ. थ. द. प.
   विजया तदेतदमितं—ट. निभूतदेतदमितं—ज.
   निजयात्मादितदमितं—त.
2. विद्यादिकं—घ. छ. त. प. विद्याधिकं—क. ट. ठ. ढ. थ. द.
3. भ्राजते—क. घ. छ. ट. ठ. ढ. त. थ. द.
4. श्रुत्याधिकं—ग. घ. च. छ. ट. ढ. द. प.
5. श्रुते—क.

बृहत्त्वात्[1] बृंहणत्वाच्च[2] ब्रह्मेति परिकीर्तितम्[3] ॥ २ ॥

[ब्रह्मविभागः]

ब्रह्मतत्त्वमिति ज्ञेयं[4] भवेत् तद् ब्रह्म पञ्चधा[5] ।
पञ्चब्रह्मप्रकारेण पञ्चविंशतिभेदकम्[6] ॥ ३ ॥
एभिर्भेदैर्युतं[7] पञ्चविंशतिः तत्त्वसंयुतम्[8] ।

---

इति उक्तरीत्या ब्रह्मतत्त्वं ज्ञेयम्-ज्ञातव्यम् । 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या समस्तानामपि ब्रह्माभिधानं भवति । तद् ब्रह्म पञ्चधा भवेत् शिवतत्त्वाख्यं तत् परब्रह्मतत्त्वं स्वस्य सकलगुणप्रभावेण पञ्चप्रकारं भवति । पञ्चब्रह्मप्रकारेण यथा एकं ब्रह्म पञ्चधा भवति तथा पञ्चब्रह्मसु एकैकमपि ब्रह्म पञ्चधा भवति । तथाच पञ्चविंशतिभेदकम् तद् ब्रह्म पञ्चविंशतिभेद-युक्तं भवति ॥ ३ ॥

एभिः भेदैः युतं इत्येतैः भेदैः सह विद्यमानं तत्त्वसंयुतं सकल-तत्त्वसहितं तद्ब्रह्म पञ्चविंशतिः पञ्चविंशतिभेदं भवति । इति इत्येवंप्रकारेण

---

1. ब्रह्मत्वात्-प.
2. ब्राह्मणत्वाच्च-प.
   ब्रह्मणत्वाच्च-घ. ढ. त. द.
3. ब्रह्ममित्यभिधीयते-ग.
   ब्रह्म इत्यभिधीयते-ख. (पा). ध.
4. ब्रह्मत्वमिति विज्ञेयं-ग. च. छ. ज. झ. ड. ढ. त. द वर्जं अन्येषु पुस्तकेषु.
5. तद् ब्रह्म पञ्चधा भवेत्-ख. घ.
   तद् ब्रह्मं पञ्चधा भवेत्-क. छ. ज. ट. ठ. ढ. थ. द. ध. प.
6. भेदकः-ख. झ.
7. युक्तम्-ध.
8. पञ्चविंशत्तत्त्वसंयुतम्-प.
   पञ्चविंशतितत्त्वसंयुतम्-क. घ. छ. ट. ढ. ज. द. ध.

इत्येतत् पञ्चभेदत्वात् ब्रह्मपञ्चकमीरितम्[1] ॥ ४ ॥

[विभक्तानां नामानि]

मूर्तिब्रह्म[2] तथा पूर्वं[3] तत्त्वब्रह्म[4] द्वितीयकम् ।
भूतब्रह्म[5] तृतीयं स्यात् पिण्ड[6]ब्रह्म चतुर्थकम् ॥ ५ ॥
पञ्चमं च कलाब्रह्म[7] ब्रह्मपञ्चकमीरितम्[8] ।

---

**एतत्** निष्कलब्रह्मेत्युक्तं शिवतत्त्वं **पञ्चभेदत्वात्** कलासहितमिति लीलामात्रात् पञ्चीकृतभेदात् **ब्रह्मपञ्चकमीरितं** पञ्चब्रह्ममयमिति कथितम् ॥ ४ ॥

**मूर्तिब्रह्म पूर्वं** तत्र प्रथमं मूर्तिब्रह्म भवति । **तथा तत्त्वब्रह्म द्वितीयकं** द्वितीयं तत्त्वब्रह्म भवति । **भूतब्रह्म तृतीयं स्यात्** तृतीयं भूतब्रह्म भवति । **पिण्डब्रह्म चतुर्थकम्** चतुर्थं पिण्डब्रह्म भवति ॥

**पञ्चमं च कलाब्रह्म** पञ्चमं कलाब्रह्मेत्यभिहितम् । **ब्रह्मपञ्चकमीरितं**

---

1. पञ्चब्रह्म उदाहृतम्–ख. (पा). ध.
   पञ्चब्रह्ममुदाहृतम्–घ. छ. ज. ट. ठ. ढ. त. थ. द.
2. ब्रह्मं–घ. छ. ज. ट. ठ. ढ. त. थ. द.
3. भवेत् पूर्वं–ख. झ.
4. ब्रह्मं–क. ध. छ. ज. थ.
5. भूतब्रह्मं–क. घ. छ. ज. ट. ठ. ढ. त. थ. द. प.
   भूतिब्रह्म–झ.
6. पिण्डं–छ.
7. पञ्च पञ्च कलाब्रह्म–झ.
   पञ्चमं तु कलाब्रह्म–ख. ट. ढ. द, ध.
   पञ्चमं तु कलाब्रह्मं–क. घ. छ. ठ. त. थ. प.
   पञ्चमं तु कला प्रोक्तं–ग.
8. पञ्चमं चमुदाहृतम्–छ. त.
   पञ्चब्रह्म उदाहृतम्–ग,

[तत्र प्रथममूर्तिब्रह्मलक्षणम्]

पञ्चानां ब्रह्मणामेषां[1] लक्षणं[2] वक्ष्यतेऽधुना ॥ ६ ॥

ब्रह्मा विष्णुश्च रुद्रश्च मूर्तयः[3] प्रणवाधिपाः ।

तस्मात्[4] प्रणवरूपं तु मूर्तिरूपमुदाहृतम् ॥ ७ ॥

साकल्यादिस्तु[तु]यत् पञ्च मूर्तिब्रह्म तदुच्यते[5] ।

[द्वितीय-तत्त्वब्रह्मलक्षणम्]

एतेषां चैव तत्त्वानां[6] शिवतत्त्वं प्रभुः स्मृतम् ॥ ८ ॥

---

एवं पञ्चब्रह्मस्वरूपं कथितम् । **एषां** अमीषां **पञ्चानां ब्रह्मणां अधुना** इदानीं **लक्षणं वक्ष्यते** अभिधीयते ॥ ६ ॥

इदानीं मूर्तिब्रह्म निरूप्यते—**ब्रह्मा विष्णुश्च रुद्रश्च मूर्तयः** सृष्टि। स्थितिसंहारकर्तारः ब्रह्मविष्णुरुद्राः त्रिमूर्तयः, **प्रणवाधिपाः** प्रणवाधिदेवताः प्रणवावयवभूतानां अकार-उकार-मकाराणां क्रमेण अधिदेवताः भवन्ति - **तस्मात्** कारणात् **प्रणवरूपं** प्रणवस्वरूपं **तु मूर्तिरूपं** मूर्तिब्रह्मेति **उदाहृतं** कथितम् ॥ ७ ॥

**साकल्यादि तु यत् पञ्च** साकल्यादिपञ्चप्रणवानां अङ्गभूतानि यान्यक्षराणि तेषां यः समूहः, **तत् मूर्तिब्रह्म उच्यते** मूर्तिब्रह्मेति कथ्यते ।

---

1. एतेषां ब्रह्मपञ्चानां–क. ज.
   एतेषां ब्रह्मपञ्चानां-ग. घ. च. छ. ट. ठ. ड. ढ. त. थ. द. ध.
2. लक्षणे–त.
3. त्रिमूर्तिः–ज. ध.
   त्रिमूर्ति–क. ख. छ. ट. ठ. ढ. त. द. प.
4. एतत्–ख. झ.
5. मूर्तिब्रह्मं तदुच्यते–क. घ. छ. ट. ठ. त. थ.
   मूर्तिब्रह्मेति कीर्तितम्–ग.
6. एतेषां तत्त्वभेदानां–झ.

एतत् शिवमयं[1] बीजं शिवार्णं चेति कीर्तितम् ।
तस्मात् शुद्धादि चात्मान्तं[2] तत्त्वब्रह्म[3] प्रकीर्तितम् ॥ ९ ॥

[तृतीय-भूतब्रह्मलक्षणम्]

प्रथमं मांसबीजं स्यात् द्वितीयं मेदसो[4] भवेत् ।
तृतीयं षष्ठबीजं[5] स्यात्[6] चतुर्थं सप्तमं तथा[7] ॥ १० ॥

---

**एतेषां चैव तत्त्वानां** त्रिवर्णभूतसमस्ततत्त्वानां प्रणवान्तर्गत-अकार-उकार-मकारात्मकबीजानाम्, **शिवतत्वं** शिवतत्त्वबीजं **प्रभुः** इति **स्मृतं** भवति । अकारोकारमकारात्मकसमस्तवर्णानां हकारः प्रभुस्थानीयः भवति इत्यर्थः ॥ ८ ॥

**एतत्** इदमेव **शिवमयं बीजं** शिवस्वरूपभूतबीजाक्षरं हवर्णं, **शिवार्णं चेति** शिवबीजं चेति **कीर्तितं** सर्वागमेषु कथितम् । **तस्मात्** कारणात् **शुद्धादि चात्मान्तं** शुद्धप्रासादपूर्वं आत्मप्रासादान्तं पञ्चप्रासादरूपम् **तत्त्वब्रह्म** तत्त्वब्रह्मेति **प्रकीर्तितं** कथितम् ॥ ९ ॥

**प्रथमं मांसबीजं स्यात्** मांसबीजं लकारः प्रथमभूतबीजं भवति । **द्वितीयं मेदसो भवेत्** मेदसो बीजं वकारः द्वितीयभूतबीजं भवति । **तृतीयं षष्ठबीज स्यात्** षष्ठाभिधानबीजं रेफः तृतीयभूतबीजं भवति । **चतुर्थं सप्तमं तथा** सप्तमाभिधानबीजं यकारः चतुर्थबीजं भवति ॥ १० ॥

---

1. एवं शिवमयं–घ.
   एते चैव मतं–त.
2. चात्मानं–ग. च.
3. ब्रह्मं–घ. छ. ज. ट. ठ. ढ. त. थ. द. प.
4. मेधसो–ढ.
5. षष्ठभेदं–क. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
   षष्ठभेदः–ख. (पा).
6. तु–क. ख. (पा). घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
7. तदा–त.
   ततः–झ.

पञ्चमं पञ्चमं विद्यात्[1] पाञ्च[2]भौतिकमुच्यते ।
[3]मांसं वै पार्थिवं बीजं मेदसो[4] ह्याप[5] उच्यते[6] ॥ ११ ॥

षष्ठं[7] तेजो विनिर्दिष्टं[8] सप्तमं मारुतात्मकम् ।
पञ्चमं व्योमबीजं स्यात् भूतब्रह्मेति कीर्तितम्[9] ॥ १२ ॥

---

**पञ्चमं पञ्चमं विद्यात्** पञ्चमाख्यहकारः पञ्चमभूतबीजं भवति । **पाञ्चभौतिकमुच्यते** एवं पाञ्चभौतिकत्वमुक्तं भवति । पृथिव्यादिभूतेषु लकाराद्यक्षराणि वर्तन्ते । तद्यथा-**मांसं वै पार्थिवं बीजं** लकारः पृथिवीबीजं भवति । **मेदसो ह्याप उच्यते** मेदसो बीजं वकारः अब्बीजं भवति ॥११॥

**षष्ठं तेजोविनिर्दिष्टं** रेफः तेजोबीजं भवति । **सप्तमं मारुतात्मकं** यकारो वायुबीजं भवति । **पञ्चमं व्योमबीजं स्यात्** हकारः व्योमबीजं भवति । **भूतब्रह्मेति कीर्तितम्** एतदेकैकमपि भूतब्रह्म भवति ॥ १२ ॥

---

1. विन्द्यात्–क. ख. ट. ठ. ढ. त. थ. द. ध.
2. पञ्च–क. छ. ट. ठ. ढ. थ. द.
3. 'मांसं वै' इत्यारभ्य 'भूतब्रह्मेति कीर्तितं' इत्यन्तभागात्पूर्वं संस्कृतव्याख्यायां "उक्तं च" इति दृश्यते ।
4. मेदसा–ढ.
5. ह्यापं–क. घ. ट.
   रूपं–झ.
6. ईरितम्–झ.
7. षष्ठ–क.
8. विनिर्दृष्टं–त.
9. ब्रह्म प्रकीर्तितं–ख(पा).
   ब्रह्मं प्रकीर्तितं–क. घ. छ. ज. ट. ठ. ढ. त. थ. द. प.

[चतुर्थपिण्डब्रह्मलक्षणम्]

सप्तके प्रकृतौ वर्णे[1] तुरीयं[2] पञ्चमं[3] त्यजेत्[4] ।
शेषेषु पञ्चवर्णेषु पञ्चमं सह योजयेत्[5] ॥ १३ ॥
बिन्दुनादसमायुक्तं पञ्चवर्णानामनुक्रमात्[6] ।
[7] प्रकृति[8]स्वरसंयुक्तं हकारेषु अ[ह्य]नुक्रमात् ॥ १४ ॥

---

अथ पिण्डब्रह्म निरूप्यते—प्रकृतौ सप्तके वर्णे—षोडशकलानां मध्ये प्रकृतिभूतानि सप्त ह्रस्वाक्षराणि भवन्ति । तेषु—तुरीयं पञ्चमं त्यजेत् तुर्यं ऋकारं पञ्चमं ढकारं च त्यजेत् । शेषेषु पञ्चवर्णेषु एवं त्यक्त्वा परिशिष्टपञ्चप्रकृतिकलासु, पञ्चमं सह योजयेत् एकैकेन साकं पञ्चमाख्यं हकारं योजयेत् ॥ १३ ॥

पञ्चवर्णानामनुक्रमात् पूर्वोक्तानां हकारसहितपञ्चप्रकृतिवर्णानां मध्ये एकैकमपि क्रमेण, बिन्दुनादसमायुक्तं अनुस्वारसहितम्, कुर्यादिति शेषः ॥

---

1. सप्त ते प्रकृतौ वर्णे–द. प.
   सप्त प्रकृतिवर्णे–ख(पा).
   सप्तप्रकृतिवर्णे तु–झ(पा).
2. चतुर्थं–ज. प.
   तुर्यं–घ. ट. ठ. त. द.
   तुर्यं वै–थ.
   तूर्यं–ढ.
3. पञ्चकं–क. ग. घ. च. छ. ज. ट. ठ. ड. त. थ. द. प.
4. न्यसेत्–झ.
5. पञ्चमं च प्रयोजयेत्–ख. झ.
6. पञ्चवर्णेष्वनुक्रमात्–क. ख. घ. ज. ट. ठ. ढ. त. थ. द. ध. प.
   पञ्चवर्णोपनुक्रमात्–छ.
7. पद्यार्धमिदं–क. ख. घ. छ. झ. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न–दृश्यते ।
8. प्रकृत–ज.

[पिण्डब्रह्मणां पञ्चानां नामानि]

[1]तेषां नामानि वक्ष्यामि समासात् शृणु षण्मुख ।
सद्योजातं तथा[2] पूर्वं वामदेवं द्वितीयकम् ॥ १५ ॥
अघोरं तु[3] तृतीयं च[4] चतुर्थं पुरुषं तथा[5] ।
ईशानं पञ्चमं विद्यात्[6] एवमाख्याः प्रकीर्तिताः[7] ॥ १६ ॥

---

इदानीं प्रकृतिस्वरहकारयोः योजनाक्रमः निरूप्यते—**हकारेषु ह्यनुक्रमात्** पञ्चसु हकारेषु क्रमशः एकैकमपि, **प्रकृतिस्वरसंयुक्तं** प्रकृतिस्वरसहितं कुर्यादिति शेषः । एवं योजना कृता चेत्—हं हिं हुं हें हों इति पिण्डब्रह्मबीजपञ्चकं उद्धृतं भवति । वह्निरहितमेतत् तान्त्रिकं बीजं भवति । वह्निसंयुक्तं चेत्—ह्रं ह्रिं ह्रुं ह्रें ह्रों इति वैदिकपिण्डब्रह्मबीजं भवति ॥ १४ ॥

हे **षण्मुख!** पूर्वोक्तानां पञ्चानां पिण्डब्रह्मणां **नामानि** संक्षेपेण **वक्ष्यामि** । तत्र—**सद्योजातवक्त्रं** प्रथमं भवति । **वामदेववक्त्रं द्वितीयं** विद्यात् ॥ १५ ॥

**अघोरवक्त्रं तृतीयं** विद्यात । तत्पुरुषवक्त्रं **चतुर्थं** विद्यात् । **ईशानवक्त्रं पञ्चमं** विद्यात् । इत्थं पञ्चनामानि कथितानि ॥ १६ ॥

---

1. पद्यार्धमिदं—क. घ. छ. ज. ट. ठ. थ. द ध. प. पुस्तकेषु न दृश्यते ।
2. तदा -त.
3. च—ख.
4. स्यात्—क. ख. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प.
5. तत्पुरुषं हि वै—क. छ. ट. ठ. ढ. त. थ. द. ध. प.
   पुरुषं वै हि—घ.
   भवेत्—ग. च.
6. विन्द्यात्—क. घ. छ. ट. ठ. ढ. त थ. द. ध.
7. पञ्चनामानि चोच्यते—ग. च.

[पञ्चपिण्डब्रह्ममन्त्रोद्धारक्रमः]

प्रणवादिचतुर्थ्यन्त[1]स्वनामपदमध्यगान्[2] ।
नमस्कारान्तसंयुक्तान्[3] सद्यादीन् योजयेत्[4] क्रमात् ॥ १७ ॥

---

मन्त्रादौ प्रणवं संयोज्य ततः क्रमेण पिण्डब्रह्मबीजानि हं इत्यादीनि संयोज्य ततः स्वनामपदभूतसद्योजातादीन् चतुर्थ्यन्तान् संयोज्य ततः सद्योजातादि स्वनामान्ते नमःपदं संयोज्य पञ्चापि पिण्डब्रह्ममन्त्रान् क्रमशः उद्धरेत् ।

एवं चेत्—

१) ओं हं सद्योजाताय नमः
२) ओं हिं वामदेवाय नमः
३) ओं हुं अघोराय नमः
४) ओं हें तत्पुरुषाय नमः
५) ओं हों ईशानाय नमः

इति रेफसंहिताः पञ्च तान्त्रिकपिण्डब्रह्ममन्त्राः भवन्ति—

१) ओं ह्रं सद्योजाताय नमः
२) ओं ह्रिं वामदेवाय नमः
३) ओं ह्रुं अघोराय नमः
४) ओं ह्रें तत्पुरुषाय नमः
५) ओं ह्रों ईशानाय नमः

इति रेफसहिताः पञ्च वैदिकपिण्डब्रह्ममन्त्राः भवन्ति ॥ १७ ॥

---

1. र्थ्यन्तं–ग. च.
2. मध्यगं–ग. च.
3. संयुक्तं–क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प.
4. पूजयेत्–त.

[ पिण्डब्रह्मस्वरूपनिगमनम् ]

शिवार्णे जीववर्णानां [1] संयोगात् पिण्डमुच्यते ।
कर्मेशः [2] पिण्डरूपत्वात् पिण्डब्रह्मेति कीर्तितम् [तः] [3] ॥ १८ ॥

[पञ्चमकलाब्रह्मलक्षणम् ]

[तत्र कलाब्रह्मणः पञ्चधा विभागः]

ईशानः [4] पुरुष [5] श्चैवं [6] अघोरो [7] वामदेवकः [8] ।
सद्योजातश्च [9] पञ्चैते कलाब्रह्म प्रकीर्तिताः [10] ॥ १९ ॥

---

शिवार्णे हकारे जीववर्णानां अकारादिपञ्चप्रकृतिस्वराणां **संयोगात्** सम्बन्धात् **पिण्डमुच्यते** पिण्डमित्युक्तं भवति । **कर्मेशः** कर्मेशतत्त्वम् **पिण्डरूपत्वात्** पिण्डस्वरूपत्वकारणात् **पिण्डब्रह्मेति कीर्तितः** पिण्डब्रह्मेत्यभिहितो भवति ॥ १८ ॥

इदानीं कलाब्रह्म निरूप्यते—पञ्चब्रह्ममन्त्राणां अष्टत्रिंशत्कलान्यास-

---

1. जीववर्णानि–क. घ. छ. ठ. ढ. त. थ. द. ध. प.
   शिववर्णानि–ट.
   शिववर्णानां–ग. च.
2. कर्मेशात्–क.
   कर्मेशं-ख. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द.
3. ब्रह्म उदाहृतम्-ख(पा). ध.
   ब्रह्ममुदाहृतम्–क. घ. छ. ज. ट. ठ. ढ. त. थ. द. प.
4. ईशानं-क. ग. घ. च. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
5. पुरुषं-क. ग. घ. च. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
6. चैव–क. ख. ग. घ. च छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. प.
7. अघोरं–क. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. प.
8. वामदेवकं–क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प.
9. सद्योजातं च–क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध.
10. ब्रह्म प्रकीर्तितम्-छ. ट. ध.
    ब्रह्मं प्रकीर्तितम्–क. घ. ठ. ढ. त. थ. द. प.
    ब्रह्ममुदाहृतम्–ग. च.

[मन्त्रभेदेन कलासङ्ख्याः]

ईशानस्य[1] कलाः पञ्च पुरुषस्य चतुष्कलाः[2] ।
अघोरस्य कला चाष्टौ[3] वामदेवे[4] त्रयोदश[5] ॥ २० ॥

सद्यस्याष्टकलाः ज्ञेयाः[6] अष्टत्रिंशत्कलाः स्मृताः[7] ।

---

सम्बन्धविधानात् तासां कलानामेव कलात्रयस्त्वमुच्यते । एतानि—ईशान-तत्पुरुष-अघोर-वामदेव-सद्योजातस्वरूपाणि प्रत्युत कलात्मकत्वेन ज्ञायन्ते ॥ १९ ॥

ईशानस्य पञ्च कलाः, तत्पुरुषस्य चतस्रः कलाः, अघोरस्य अष्टौ कलाः, वामदेवस्य त्रयोदश कलाः ॥ २० ॥

सद्योजातस्य अष्टौ कला भवन्ति । एवं आहत्य अष्टत्रिंशत्कला

---

1. ईशानस्यात्—क.
2. चतुःकलाः—ङ.
   चतुष्कला—क. ख. ग. ङ. च. छ. झ. ट.
3. कलाचाष्ट—ङ.
   कलाश्चाष्टा—क. ग. ङ. च.
   कलाचाष्टौ—ज. ग. छ.
4. वामदेवाः—ख.
   वामदेव—क. ख. ङ. ग. घ. च. छ. झ. ट. ग.
   वामदेवः—ज.
5. त्रयोदशम्—ग. ट.
6. सद्योजातकलाश्चाष्टौ—च.
   सद्यस्याष्टकला ज्ञेयः—ङ.
   सद्यस्याष्टकला ज्ञेयम्—क. ग.
   सद्यस्याष्टकला ज्ञेयः—ज. ग. छ. ट.
7. स्मृतम्—ग. ट.

[तत्र पञ्चविधेशानमन्त्रकलाः]

ईशानः सर्वविद्यानां प्रथमं[1] परिकीर्तितम्[2] ॥ २१ ॥
ईश्वरः सर्वभूतानां द्वितीयं[3] परिकीर्तितम्[4] ।
ब्रह्माधिपतिरित्येव[5] ब्रह्मणोऽधिपतिस्तथा ॥ २२ ॥
ब्रह्मेतीदं[6] तृतीयं स्यात् शिवो मेऽस्तु चतुर्थकम्[7] ।
[8]सदाशिवोमिति ज्ञेयं[9] पञ्चम[10] परिकीर्तितम्[11] ॥ २३ ॥

---

भवन्ति । तत्र ईशानमन्त्रस्य कला निरूप्यन्ते— "ईशानः सर्वविद्यानाम्" इति प्रथमं कलारूपम् ॥ २१ ॥

"ईश्वरः सर्वभूतानाम्" इति द्वितीयं कलारूपम् । "ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा" इति तृतीयं कलारूपम् । "शिवो मे अस्तु" इति चतुर्थं कलारूपम् । "सदाशिवोम्" इति पञ्चमं कलारूपम् ॥२२॥

---

1. प्रथमः–म.
2. परिकीर्तितः–म.
3. द्वितीयः–म.
4. चेति कीर्तितम्–क. ख. ग. छ. ट. ठ. ढ. त. थ. द. ध. प.
   समुदाहृतः–म.
5. पतिश्चैव–ख. ज. थ.
6. ति च–म.
   ति तत्–घ.
7. चतुर्थकः–म.
8. "सदाशिवो" मित्यारभ्य "शिवोऽन्यः स्यात् चतुर्थकम्" इत्यन्तो भागः–च. पुस्तके न दृश्यते ।
9. मिति ज्ञेय–म.
10. पञ्चमः–म.
11. मिति कीर्तितम्–क. ख. ट. ठ. ढ. त. थ. द. प.
    चेति कीर्तितम्–ञ.

एता[1] ईशान[2]रूपाश्च पञ्चसंख्याः[3] प्रकीर्तिताः ।

[चतुर्विधतत्पुरुषमन्त्रकलाः]

तत्पुरुषाय विद्महे प्रथमं परिवक्ष्यते[4] ॥ २४ ॥

महादेवाय धीमहि तन्नो चेति द्वितीयकम्[5] ।
रुद्रः तृतीयमित्युक्तं[6] चतुर्थं तु[7] प्रचोदयात् ॥ २५ ॥

---

"ईशानः सर्वविद्यानां" इत्यूर्ध्वे । "ईश्वरः सर्वभूतानाम्" इति पूर्वे । "ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा" इति दक्षिणे । "शिवो मे अस्तु" इत्युत्तरे । "सदाशिवोम्" इति पश्चिमे ॥

अयं चात्रेशानमन्त्रः—"ईशानः सर्वविद्यानां ईश्वरः सर्वभूतानां ब्रह्माऽधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम्" इति ॥ २३ ॥

ईशानमन्त्रे पूर्वोक्तपञ्चकलाः वर्तन्ते । इदानीं तत्पुरुषमन्त्रस्य कलाः निरूप्यन्ते तत्र 'तत्पुरुषाय विद्महे' इति प्रथमं कलारूपम् ॥ २४ ॥

'महादेवाय धीमहि तन्नो' इति द्वितीयं कलारूपम् । 'रुद्रः' इति तृतीयं कलारूपम् । 'प्रचोदयात्' इति चतुर्थं कलारूपम् ॥ २५ ॥

---

1. एते–ग. च. ज.
2. चेशान–ख. घ. ज. ध.
   चैशान–क. ट. ठ. ड. त. थ. द. प.
3. सङ्ख्या–क. घ. ट.
4. प्रथमः परिकीर्तितः–झ.
5. द्वितीयः परिकीर्तितः–झ.
6. तन्नो रुद्रः तृतीयः स्यात्–झ.
7. चतुर्थस्तु–झ.

एवं तत्पुरुषस्यैव[1] चतस्रश्च कलाः स्मृताः[2] ।

[अष्टविधाघोरमन्त्रकलाः]

अघोरेभ्यस्तथा पूर्वं अथ घोरेभ्यो द्वितीयकम्[3] ॥ २६ ॥

घोरघोरतृतीयं स्यात्[4] तरेभ्यश्च चतुर्थकम्[5] ।

सर्वतः पञ्चमं विद्यात्[6] षष्ठं सर्वमुदाहृतम्[7] ॥ २७ ॥

---

अयं चात्र तत्पुरुषमन्त्रः—"तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ।" इति । अस्मिन् तत्पुरुषमन्त्रे पूर्वोक्ताः **चतस्रः कलाः** वर्तन्ते ॥

इदानीं अघोरमन्त्रस्य कलाः निरूप्यन्ते—'**अघोरेभ्यः**' इति प्रथमं कलारूपम् । '**अथ घोरेभ्यः**' इति **द्वितीयं** कलारूपम् ॥ २६ ॥

'**घोरघोर**' इति **तृतीयं** कलारूपम् । '**तरेभ्यः**' इति **चतुर्थं** कलारूपम् । '**सर्वतः**' इति **पञ्चमं** कलारूपम् । '**सर्व**' इति **षष्ठं** कलारूपम् ॥ २७ ॥

---

1. एवं पुरुषकलाश्चैव–क. घ. ज. ट. ठ. ढ. त थ. द. ध. प.
2. चत्वारश्चेति कीर्तिताः–क. घ. ज. ट. ठ. ढ. त. थ. द. ध.
   चत्वारेति प्रकीर्तिताः–प.
3. अघोरेभ्यो भवेदाद्योऽथ घोरेभ्यो द्वितीयकः–ग. च.
   घोरेभ्यश्च द्वितीयकम्–क. ख. घ. ट. ठ. ढ. त. थ. द. ध.
   अघोरेभ्यो द्वितीयकम्-ज.
   घोरेत्युक्तं द्वितीयकम्–प.
4. घोरघोरस्तृतीयं स्यात् ख.
   घोरघोरं तृतीयं स्यात्-क. ज. ट.
5. घोरः स्यादपरो घोरतरेभ्यः स्याच्चतुर्थकः–ग. च.
6. विन्द्यात्–क. घ. ट. ठ. ढ. त. थ. द. ध.
7. पञ्चमः सर्वतः सर्वः शर्वेभ्यः षष्ठ उच्यते–ग. च.

सर्वेभ्यो नमस्ते अस्तु सप्तमं चेति कीर्तितम्[1] ।
अष्टमं रुद्ररूपेभ्यश्चाघोरस्याष्टकं स्मृतम्[2] ॥ २८ ॥

[त्रयोदशविधवामदेवमन्त्रकलाः]

प्रथमं वामदेवाय ज्येष्ठायेति द्वितीयकम् ।
तृतीयं रुद्राय नमः कालायेति चतुर्थकम्[3] ॥ २९ ॥

---

'सर्वेऽभ्यो नमस्ते अस्तु' इति सप्तमं कलास्वरूपम् । 'रुद्ररूपेभ्यः' इति अष्टमं कलारूपम् । अयं चात्राघोरमन्त्रः— "अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः सर्वतः सर्व सर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः" इति । अत्र पूर्वोक्ताः अष्टौ कलाः वर्तन्ते ॥ २८ ॥

इदानीं वामदेवमन्त्रस्य कलाः निरूप्यन्ते—"वामदेवाय नमः" इति प्रथमं कलारूपम् । "ज्येष्ठाय नमः" इति द्वितीयं कलारूपम् । "रुद्राय नमः" इति तृतीयं कलारूपम् । "कालाय नमः" इति चतुर्थं कलारूपम् ॥ २९ ॥

---

1. सर्वेभ्यो नमस्ते अस्तु सप्तमं परिकीर्तितम्–ध.
   सर्वेभ्यो नमस्ते अस्तु सप्तमं चेति किर्तिताः–क.
   नमस्ते अस्तु रुद्रेति सप्तमः समुदाहृतः–ग. च. झ.
2. रूपेभ्यश्चाष्टमः प्रोक्तश्चाघोरस्याष्टकं स्मृतम्–ग. च. झ.
   अष्टमं रुद्ररूपेभ्यो अघोरस्याष्टकं स्मृतम्–क. ख. घ. छ. ट ठ. ढ. त. थ. द.
   अघोरस्याष्टकं स्मृतं रुद्ररूपेभ्यश्चाष्टमम्–थ. प.
3. श्रेष्ठायेति तृतीयं स्यात् रुद्रायेति चतुर्थकम्–ग. च. झ.
   तृतीयरुद्राय नमः कालायेति चतुर्थकम्–त.

पञ्चमं कल इत्युक्तं विकरणाय नमस्तु षट्[1] ।
सप्तमं बल[2] इत्युक्तं अष्टमं[3] विकरणाय च ॥ ३० ॥
नवमं बल इत्युक्तं[4] दशमं[5] प्रमथनाय च ।
सर्वभूतदमनाय नमश्चैकादशं स्मृतम्[6] ॥ ३१ ॥
[7]द्वादशं च मनश्चेति त्रयोदशोन्मनाय च[8] ।

---

'कल' इति पञ्चमं कलारूपम् । 'विकरणाय नमः' इति षष्ठं कलारूपम् । 'बल' इति सप्तमं कलारूपम् । 'विकरणाय नमः' इति अष्टमं कलारूपम् ॥ ३० ॥

'बल' इति नवमं कलारूपम् । 'प्रमथनाय नमः' इति दशमं कलारूपम् । 'सर्वभूतदमनाय नमः' इति एकादशं कलारूपम् ॥ ३१ ॥

'मनः' इति द्वादशं कलारूपम् । 'उन्मनाय नमः' इति

---

1. पञ्चमं काल इत्युक्तं कलविकरणाय नमस्तु षट्–ग. च. झ.
   कालाय पञ्चमं चैव कलाविकरणाय षट्–ध.
   पञ्चमं कालमित्युक्तं विकरणाय नमस्तु षट्–क. घ. ज.
2. बलं–क. ख. ग. घ. च. ज. झ. ट. ठ. ड. ढ. त. द. ध. प.
   जलं–छ.
3. अष्टौ–ध.
   चाष्टमं–क.
4. बलाय नवमं चेति–ज.
   नवमं बलमित्युक्तम्–क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ढ. त. द. प.
5. दश–ध.
6. दमनायैकादशं च द्वादशं मन उच्यते–ग. च. झ.
   सर्वभूतदमनायेति एकादशमिति स्मृतम्–ज.
7. पद्यार्धमिदं–ग. च. झ. पुस्तकेषु न दृश्यते ।
8. द्वादशश्च मनश्चेति त्रयोदशोन्मनाय च–प.
   द्वादशं च मनश्चेति उन्मनाय त्रयोदशम्–ख. ज.

एताः त्रयोदशकलाः [1] वामदेवकलाः स्मृताः [2] ॥ ३२ ॥

[अष्टविधसद्योजातमन्त्रकलाः]

सद्योजातं प्रपद्यामि प्रथमं परिकीर्तितम् [3] ।
द्वितीयं सद्योजाताय वै नमश्चेति कीर्तितम् [4] ॥ ३३ ॥

---

त्रयोदशं कलारूपम् । अत्रायं वामदेवमन्त्रः—"वामदेवाय नमो ज्येष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः" इति । अत्र पूर्वोक्ताः त्रयोदशकलाः वर्तन्ते ॥ ३२ ॥

अत्रैवं संस्कृतव्याख्यायाम्—"वामदेवाय नमः, ज्येष्ठाय नमः, रुद्राय नमः, कालाय नमः, कलाय नमः, विकरणाय नमः, बलाय नमः, विकरणाय नमः, बलाय नमः, प्रमथनाय नमः, सर्वभूतदमनाय नमः, मनाय नमः, उन्मनाय नमः—एताः वामदेवकलाः त्रयोदश" इति दृश्यते ॥

इदानीं सद्योजातमन्त्रस्य कलाः निरूप्यन्ते—'सद्योजातं प्रपद्यामि' इति प्रथमं कलारूपम् । 'सद्योजाताय वै नमः' इति द्वितीयं कलारूपम् ॥

---

1. एतत् त्रयोदशकला-ग. च. झ.
एते त्रयोदशकला-क. घ. छ. ज. ट. ड. त. थ. द. प.
2. वामदेवेति कीर्तिताः-ग. च. झ.
वामदेवायेति कीर्तिताः.-घ.
वामदेवेति कीर्तितम्-छ.
3. परिकीर्त्यते-झ.
4. सद्योजाताय वै नमश्चेति द्वितीयं परिकीर्तितम्-ग. द.
द्वितीयं पदमित्युक्तं सद्योजाताय वै नमः-झ.

तृतीयं तु[1] भवे चैवा[2]भवे चेति[3] चतुर्थकम्[4] ।
पञ्चमं च[5] नातिभवे षष्ठं चेति भजस्व माम्[6] ॥ ३४ ॥
सप्तमं तु भवं[7] विद्यात्[8] उद्भवायाष्टमं[9] भवेत्[10] ।
एवमष्टकलाश्चैव[11] सद्योजाते प्रकीर्तिताः[12] ॥ ३५ ॥

---

'भवे' इति तृतीयं कलारूपम् । 'अभवे' इति चतुर्थं कलारूपम् । 'नातिभवे' इति पञ्चमं कलारूपम् । 'भजस्व मां' इति षष्ठं कलारूपम् ॥ ३४ ॥

'भव' इति सप्तमं कलारूपम् । 'उद्भवाय नमः' इत्यष्टमं कलारूपम् । अत्रायं सद्योजातमन्त्रः—"सद्योजातं प्रपद्यामि सद्योजाताय वै नमः । भवे भवे नातिभवे भजस्व मां भवोद्भवाय नमः" इति । अत्र अष्टौ कलाः वर्तन्ते ॥ ३५ ॥

---

1. स्यात्–झ.
2. भवश्चैव–ग. च.
3. भवेति च–ग. च.
   अभवे स्यात्–झ.
4. चतुर्थकः–झ.
5. चा–ध.
6. स्यात् पञ्चमो नातिभवे ततष्षष्ठो भजस्व माम्–झ.
   —षष्ठं चेति भवस्व माम्–ख. ग. च.
7. भवो–थ.
8. विन्द्यात्–क. च. छ. ट. ठ. त. थ. द. ध.
9. उद्भवं चाष्टमं–ग. च.
10. भवेति सप्तमश्च स्यात् उद्भवाय नमोऽष्टमः–झ.
11. कलाः प्रोक्ताः–ख. ढ. द. ध. प.
    कलाः प्रोक्तम्–क. छ.
    कला प्रोक्ता–घ. ज. ट. ठ. त. थ.
12. सद्योजातमुदाहृतम्–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
    सद्योजात उदाहृतः–ख.

[ कलाब्रह्मलक्षणनिगमनम् ]

ईशानादि च[1] सद्यान्तं[2] अष्टत्रिंशत्कलाः स्मृताः ।
अष्टत्रिंशत्कलोपेतं कलाद्यं तत् प्रकीर्तितम्[3] ॥ ३६ ॥

---

ईशानमारभ्य सद्योजातान्तमन्त्रेषु आहत्य अष्टत्रिंशत्कलाः वर्तन्ते। पूर्वोक्त अष्टत्रिंशत्सङ्ख्याककलायुक्त स्वरूपं कलाब्रह्मेत्यभिहितं भवति ॥

अयमत्र सारः—एतेषां मूर्त्यादीनां ब्रह्मत्वं कथमिति चेत्—शिवः परब्रह्मेत्युक्तः । तस्य बीजं हकारः सोऽपि कार्यकारणयोरभेदोपचारात् ब्रह्मण एव भवति । स च ब्रह्मभूतो हकारः साकल्यादिप्रणवकारणबीजेषु स्वयं जीवरूपतया स्थितः । तस्मात् पञ्चविधप्रणवश्च ब्रह्म भवति ॥

तत्त्वब्रह्मेति शुद्धाद्यात्मप्रासादान्तपञ्चविधप्रासादस्य अभिधानम् । तेष्वपि हकारो वर्तते । तस्मात् तदपि ब्रह्मेति कथ्यते । सद्योजातादीशानान्तेषु—हूं हिं हुं हें हों इति पिण्डब्रह्मबीजेषु पञ्चसु अकार-इकार-उकार-एकार-ओकाराः वर्तन्ते । तेष्वपि हकारो व्याप्य वर्तते । अ इ उ ए ओ वर्णानां—

"ह्रस्वं स्यात् ब्रह्मनिचयम् ।"
"ह्रस्वानि ब्रह्म प्रोक्तानि ।"

इति वचनाभ्यां ब्रह्मत्वं प्रसिद्धम् । तस्मात् पिण्डं ब्रह्मेति कथ्यते ॥

पृथिव्याद्याकाशान्तभूतबीजेषु—ल-व-र-य-ह वर्णेषु शिवबीजस्य स्थितत्वात् भूतं ब्रह्मेति कथ्यते ॥

---

1. ईशानपूर्व–झ.
   ईशानादीनि–क. ख. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध.
2. सद्यान्तानि–ख.
3. इतः परं—"चं ळकारे च मन्त्रेण यत्तत्वं परिकीर्तितम्"—इति अधिकः पाठः–प. पुस्तके दृश्यते ।

कलाब्रह्म इ[त्वि]ति[1] प्रोक्तं
पञ्च ब्रह्माणि[ह्येति] चोच्यते[कीर्तितम्] ।

[मूर्त्यादिस्वरूपविशेषकथनारम्भः]

मूर्त्यादीनां कलान्तानां[2]
लक्षणं वर्ण्यते[3] क्रमात् ॥ ३७ ॥

---

कलाब्रह्मापि तथैव ज्ञेयम् । कर्मसादाख्यं दिव्यलिङ्गं आत्मतत्वं पञ्चवक्त्रं पिण्डं इति एकस्यैव ब्रह्मणः पर्यायनामानि । साधकवराणां जपार्थं एकमेव ब्रह्म पञ्चधा भिन्नं स्यात् ।

"अष्टत्रिंशत्कलोपेतं कलाद्यं तत्प्रकीर्तितम् ।"

इत्युक्त-कलाज्ञानसूत्रेणापि—

"चुबुकाकारेण वक्त्रेण यत्तत्त्वं परिकीर्तितम् ।
कलाद्यं तद्विजानीयात् ।"

इति शिवभेदाष्टकस्य श्लोकार्धेनापि स्वपराशक्तिसम्भूतानां ज्योतिर्देवताधिपतीनां समस्तवर्णकलानां स्वाश्रयत्वात् पिण्डब्रह्मपञ्चकमेव कलाब्रह्ममन्त्रपञ्चकमित्युच्यते ॥ ३६ ॥

एवं कलाब्रह्मस्वरूपं निरूपितम् । इत्थं च मूर्तिब्रह्मादिकलाब्रह्मान्तपञ्चब्रह्मणां स्वरूपं निरूपितम् । पञ्चब्रह्मविभागभूतपञ्चविंशतिब्रह्म कीर्तितम् ॥

इदानीं मूर्तिब्रह्मादिकलाब्रह्मान्तानां पञ्चविंशतिब्रह्मणां स्वरूपं क्रमात् निरूप्यते ॥ ३७ ॥

---

1. कलाब्रह्ममिति–क. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. प.
2. मूर्त्यादिककलान्तानां–ख. झ.
   मूर्त्यादि च कलान्तानां–घ. ज. ट. ठ. ढ. थ. द. ध.
3. वक्ष्यते–क. ग. च. झ. ढ. त. थ. द.
   पठ्यते–ख.

[पञ्चमूर्तीनां पञ्चप्रणवस्वरूपता]

ईशानश्चेश्वरो[1] ब्रह्मा[2] शिवश्चेति सदाशिवः[3] ।
पञ्चमूर्त्याकृतिर्यद्यत्[4] तत्तद्वै[5] प्रणवाकृतिः[6] ॥ ३८ ॥

[सद्योजातादिषु पञ्चसादाख्यतत्त्वभावनाविधिः]

सद्यादीनां च पञ्चानां[7] क्रमेण परिलक्ष्यते ।
कर्मकर्तृसमूर्तिश्च[र्तं च][8] अमूर्तिश्च[त्वमूर्तं च][9] शिवस्तथा ॥ ३९ ॥

---

ईशानः, ईश्वरः, ब्रह्मा, शिवः, सदाशिवः, इति पञ्चमूर्तयः । तासां च पञ्चमूर्तीनां यद्यद्रूपमस्ति तत्तद्रूपमेव पञ्चप्रणवस्वरूपं भवति ॥ ३८ ॥

सद्योजातप्रमुखानां पञ्चमूर्तीनां क्रमशो लक्षणमुच्यते । कर्मसादाख्यम्, कर्तृसादाख्यम्, मूर्तसादाख्यम्, अमूर्तसादाख्यम्, तथा शिवसादाख्यम् ॥ ३९ ॥

---

1. ईशानं चैश्वरो–घ. द.
   ईशान ईश्वरो–ग. च.
2. ब्रह्मं–क.
3. सदाशिवम्–क.
4. यंद्वत्–ध.
5. तद्देहः–झ.
6. प्रणमाकृतिः–छ.
7. वर्णानां–झ.
8. कर्मकर्तृ तथा मूर्तिः–ध.
9. मूर्तिश्चैव–ग. च.

पञ्चसादाख्यतत्त्वानां यद्भावं[1] विन्यसेत् क्रमात् ।

[पञ्चमूर्तिषु आत्मप्रासादादिमन्त्रभावनाविधिः]

तद्भावमात्मकादीनि[2] शुद्धान्तानि[3] च लक्ष्यते ॥ ४० ॥

[सद्योजातादिषु पञ्चभूतस्वरूपभावनाविधिः]

पार्थिवं पीतवर्णं स्यात् शुक्लाभं ह्याप ईरितम् [ताः][4] ।
रक्ताभं तैजसं प्रोक्तं[5] कृष्णाभं[6] ह्यानिलं[7] विदुः ॥ ४१ ॥

---

इति पञ्चसादाख्यतत्त्वानां यद्भावः यो भावो वर्तते तद्भावं तं भावं क्रमात् क्रमशः सद्योजातादिपञ्चमूर्तिषु विन्यसेत् विन्यासं कुर्यात् भावयेदित्यर्थः ।

आत्मकादीनि आत्मप्रासादप्रमुखानि शुद्धान्तानि च शुद्धप्रासादान्तानि लक्ष्यते भाव्यन्ते इत्यर्थः । अत्र लक्ष्यते इति छन्दोऽनुरोधेनैकवचनम् ॥ ४० ॥

पृथिवीस्वरूपं पीतवर्णं भवति । अप्स्वरूपं श्वेतवर्णं भवति । अग्निस्वरूपं रक्तवर्णं भवति । वायुस्वरूपं कृष्णवर्णं भवति ॥ ४१ ॥

---

1. यद्भवं–ठ. प.
2. आत्मादीनि च तद्भावं–ख.
   तद्भावमात्मनादीनि–ग. च. झ.
3. चन्द्रान्तानि–झ.
4. भं आप ईरितम्–ध.
   भं ह्याप उच्यते–क. ख. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. प.
5. ज्ञेयं–थ.
6. कृष्णवर्णं–प.
7. भं अनिलं–क. ख. घ. छ. झ. ट. ठ. ढ. त. थ. द. ध.
   भं ह्यनिलं–ज.

व्योम [1] धूम्रनिभं [2] विद्यात् [3] एवं भूताकृतिर्भवेत् [4] ।

[सद्योजातस्वरूपम्]

गोक्षीर[5]शङ्खवर्णाभं जटामुकुटमण्डितम् ॥ ४२ ॥

चतुर्वक्त्रं चतुर्बाहुः [6] नेत्रद्वादशभिर्युतम् ।
[7]सव्ये तु टङ्कशूले चाभयं वरदमन्यके ॥ ४३ ॥

शुक्लवस्त्रधरं चैव शुक्लवस्त्रोत्तरीयकम् ।
सर्वाभरणसंयुक्तं एवं [8] सद्यमुदाहृतम् ॥ ४४ ॥

---

**व्योम धूम्रवर्णं** भवति । इत्थं सद्योजातादिमूर्तिषु पञ्चभूतादिस्वरूपाणि भावयेत् ॥

इदानीं सद्योजातस्वरूपं निरूपयति । **गोक्षीर-शङ्खाविव शुक्लवर्णं जटामुकुटेना**लङ्कृतम् ॥ ४२ ॥

**चतुर्मुखम्, चतुर्बाहुं, द्वादशनेत्रम्, सव्यहस्तयोः टङ्कशूलायुधे** दधानम्, सव्येतरहस्तयोः **अभयवरदमुद्रे** दधानम् ॥ ४३ ॥

**श्वेतान्तरीयकं श्वेतोत्तरीयकं च** दधानम्, **सर्वाभरणालङ्कृतं** च यत् स्वरूपं तत् **सद्यो**जातस्वरूपं भवति ॥ ४४ ॥

---

1. व्योमं–क. घ. ट. ढ. त. द. प.
2. धूमनिभं–ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
   धूम्रभयं–झ.
3. विन्द्यात्–क. घ. ट. ठ. थ. द. ध.
4. भूताकृतिं भवेत्–त.
5. गोक्षीरं–ग. च.
6. चतुर्बाहुं–ग. च.
7. "सव्ये तु" इत्यारभ्य "शुक्लवस्त्रोत्तरीयकं" इत्यन्तो भागः—क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न दृश्यते ।
8. एव–प.

[1]ईशानं पश्चिममुखं सद्योजातं च मुक्तिदम् ।

[वामदेवस्वरूपम्]

जपापुष्पनिभं वामं[2] जटामकुटमण्डितम् ॥ ४५ ॥

चतुर्वक्त्रसमायुक्तं चतुर्भुजसमन्वितम्[3] ।
नेत्रैः द्वादशभिर्युक्तं[4] सर्वावयवसंयुतम्[5] ॥ ४६ ॥

रक्तवस्त्रधरं देवं रक्तवस्त्रोत्तरीयकम् ।

---

इदमेवंरूपं ईशानं पश्चिमवक्त्रं सद्योजातं मुक्तिदायकं च जानीयात् ।

इदानीं वामदेवस्वरूपं निरूपयति—जपेति । जपापुष्पवत् रक्तवर्णं सुन्दरं जटामकुटालङ्कृतम् ॥ ४५ ॥

चतुर्मुखम्, चतुर्बाहुम्, द्वादशनेत्रम्, सर्वावयवोपेतम् ॥ ४६ ॥

रक्तान्तरीयं दधानम्, दीप्तियुतम्, रक्तोत्तरीयं दधानम्, दक्षिण हस्तयोः अभयं टङ्कं च दधानम् ॥ ४७ ॥

---

1. पद्यार्धमिदं—क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न दृश्यते ।
2. जपापुष्पप्रवालाभं-झ. (पा).
3. सर्वाभरणसंयुतम्—ग. च.
   चतुर्दोर्भिः समन्वितम्—क. घ. छ. ज. ट. ठ. ढ. त. थ. द. प.
4. नेत्रद्वादशभिर्युक्तम्—क. घ. छ. ज. ट. ठ. ढ. त. थ. द. प.
   नेत्रद्वादशसंयुक्तम्—ध.
5. सर्वलक्षणसंयुतम्—ग. च.
   सर्वलक्षणशोभितम्—ध.
   इतः परं 'सर्वावयवसंयुक्तं सर्वाभरणसंयुतम्' इति पाठः—ग. च. झ. पुस्तकेषु दृश्यते । परं तु अंशतः पुनरुक्तत्वात् अस्माभिः मूले न संयोजितः ॥

दक्षहस्तद्वयेनैवाभयं टङ्कं दधानकम्[1] ॥ ४७ ॥

दधानं वरदं शूलं वामहस्तद्वयेन च ।

रक्त[2]गन्धानुलिप्ताङ्गं रक्तमाल्यैरलङ्कृतम् ॥ ४८ ॥

सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ।

वामदेवमिदं[3] प्रोक्तं सर्ववश्यकरं परम्[4] ॥ ४९ ॥

महेश्वरोत्तरमुखं वामदेवमभीष्टदम्[5] ।

[अघोरस्वरूपम्]

भिन्नाञ्जनसमप्रख्यं अघोरं रौद्ररूपकम् ॥ ५० ॥

---

वामहस्तयोः वरदमुद्रां शूलायुधं च दधानम्, श्रीगन्धानुलिप्तावयवम्, रक्तकुसुममालाविभूषितम् ॥ ४८ ॥

सर्वाङ्गसुन्दरम्, सर्वाभरणालङ्कृतम्, सर्ववशङ्करम्, सर्वोत्कृष्टं च इदं वामदेवस्वरूपं भवति ॥ ४९ ॥

इमं वामदेवं महेश्वरं उत्तरवक्त्रं अभीष्टप्रदं च जानीयात् ॥

इदानीं अघोरमूर्तिस्वरूपं निरूप्यते-कृष्णवर्णं भयङ्करस्वरूपम् ॥५०॥

---

1. इतः प्राक्—"दक्षिणोऽभयटङ्कं च वामे वरदशूलभृत्" इति पाठः-ग. च. पुस्तकयोः दृश्यते । परं तु अयं पाठः अर्थतः पुनरुक्तत्वात् मूले त्यक्तः ॥
"दक्षहस्तद्वयेन" इत्यारभ्य "वामहस्तद्वयेन च" इत्यन्तो भागः-क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प पुस्तकेषु न दृश्यते ॥
2. रक्तं-ढ.
3. वामदेव इति-ख. घ. छ. ट. ठ. ढ. त. थ. द.
4. तरम्-क.
5. इदं पद्यार्धं-क. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न दृश्यते ।

चतुर्वक्त्रं चतुर्बाहु[1] जटामकुटमण्डितम् ।
द्वादशाक्षि[2]समायुक्तं[3] दंष्ट्रा[4]करालमास्यकम्[5] ॥ ५१ ॥
व्याघ्रचर्माम्बरधरं व्याघ्रचर्मोत्तरीयकम् ।
पादनूपुरसंयुक्तं सर्वाभरणभूषितम् ॥ ५२ ॥

---

चतुर्मुखम्, चतुर्भुजम्, जटामकुटालङ्कृतम्, द्वादशनेत्रसंयुक्तम्, दंष्ट्राभयङ्करमुखम् ॥ ५१ ॥

व्याघ्रचर्मान्तरीयं दधानम्, व्याघ्रचर्मोत्तरीयं दधानम्, नूपुराख्य-पादाभरणसहितम्, समस्ताभरणैरलङ्कृतम् ॥ ५२ ॥

---

1. चतुर्बाहुं–ग. च.
2. द्वादशाक्ष–ग. च.
   द्वादशाक्षर–ज.
3. समायुक्त–ढ. द.
   संयुक्तम्–ज.
4. दौंष्ट्रा–क. छ. ट. ठ. थ. द. प.
   दौष्ट्र–ढ.
   दौंष्ट्र–त.
5. अस्य पद्यस्य स्थाने–झ. पुस्तके—
   "चतुर्वक्त्रं चतुर्बाहुं नेत्रैर्द्वादशभिर्युतम् ।
   दंष्ट्राकरालवदनं जटामकुटमण्डितम् ॥"
   इति पाठो दृश्यते ।
   एतदनन्तरं–ग. च. पुस्तकयोः—
   "सर्वशत्रुक्षयकरं नीलाञ्जनसमप्रभम् ।
   चतुर्वक्त्रं चतुर्बाहुं जटमकुटमण्डितम् ॥"
   इति पाठो दृश्यते । पुनरुक्तत्वादयं पाठः अस्माभिः मूले न संयोजितः ॥

दिव्य[1]गन्धानुलिप्ताङ्गं दिव्यपुष्पैरलङ्कृतम् ।
टङ्कशूलसमायुक्तं वरदाभयसंयुतम्[2] ॥५३॥

सर्वावयवसंयुक्तं सर्वलक्षणसंयुतम् ।
[3]सर्वसम्पत्प्रदातारं समस्तदुरितापहम् ॥५४॥

लूतावृश्चिकसंयुक्तं कण्ठमालाविराजितम् ।
अघोर[4]रूपमेवं हि[5] सर्वशत्रुजयं भवेत् ॥५५॥

---

दिव्यगन्धानुलिप्तावयवम्, दिव्यकुसुमभूषितम्, हस्तेषु टङ्क-त्रिशूलायुधे अभयवरदमुद्रे च दधानम् ॥५३॥

सर्वावयवसुन्दरम्, सर्वलक्षणोपेतम्, सकलैश्वर्यप्रदम्, समस्तदुरित-विनाशकम् ॥५४॥

लूतावृश्चिकाभ्यामुपेतम्, कण्ठस्रजा शोभितम्, सर्वरिपुक्षयकरं चेत्येवंविधरूपम्, अघोरमूर्तिस्वरूपं भवति ॥५५॥

---

1. सर्व–ख. (पा).
2. अभयावरदान्वितम्–प.
   अभयवरदान्वितम्–क.
   अभयं वरदान्वितम्-ग. च.
3. "सर्वसम्पत्प्रदातारं" इत्यारभ्य 'कण्ठमालाविराजितम्' इत्यन्तो भागः–क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न दृश्यते ।
4. अघोरं–ग. च.
5. मेव हि–छ.

[1]भूतेशं तीक्ष्णवदनं एवं ध्यायेदभीष्टदम् ।

[तत्पुरुषस्वरूपम्]

पुरुषं कुङ्कुमाभं स्यात् चतुर्वक्त्रं[2] चतुर्भुजम्[3] ॥ ५६ ॥

जटामकुटसंयुक्तं नेत्रैर्द्वादशभिर्युतम्[4] ।
सर्वावयवसंयुक्तं पीताम्बरधरं परम् ॥ ५७ ॥

पीतवस्त्रोत्तरीयं च सर्वाभरणभूषितम् ।

---

इदं च अघोरमूर्तिस्वरूपं करालमुखं सकलाभीष्टप्रदं भूतेशं एवं ध्यायेत् ॥

इदानीं तत्पुरुषस्वरूपं निरूप्यते—तत्पुरुषः कुङ्कुमवर्णो भवति । इमं तत्पुरुषं चतुर्वदनम्, चतुर्बाहुम् ॥ ५६ ॥

जटामकुटालङ्कृतम्, द्वादशनेत्रम्, सर्वाङ्गसुन्दरम्, पीताम्बरान्तरीयकम्, सर्वोत्कृष्टम् ॥ ५७ ॥

पीताम्बरोत्तरीयम्, सर्वाभरणालङ्कृतम्, सव्यहस्तयोः टङ्कायुधं

---

1. पद्यार्धमिदं–क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न दृश्यते ।
2. चतुर्वक्त्र–घ.
चतुर्वक्त्रः–ठ. थ.
3. चतुर्भुजः–छ. थ.
अस्यार्धस्य स्थाने—"सौदामिनीकाञ्चनाभं चतुर्वक्त्रं चतुर्भुजम्" इति–झ. पुस्तके दृश्यते ।
4. नेत्रद्वादशभिर्युतम्–ग. च.

सव्ये तु टङ्क[1]मभयं शूलं वरदमन्यके[2] ॥ ५८ ॥

दिव्यगन्धानुलिप्ताङ्गं दिव्यपुष्पैरलङ्कृतम् ।
एवं तत्पुरुषं विद्यात्[3] सर्वसिद्धिप्रदायकम् ॥ ५९ ॥

[ईशानस्वरूपम्]

ईशानं स्फटिकाभं स्यात्[4] जटामकुटमण्डितम् ।
चतुर्वक्त्र[5]समायुक्तं द्वादशाक्षि[6]समन्वितम्[7] ॥ ६० ॥

---

**अभय**मुद्रां च दधानम्, सव्येतरहस्तयोः त्रिशूलायुधं वरदमुद्रां च दधानम् ॥ ५८ ॥

दिव्यगन्धानुलिप्तावयवम्, दिव्यकुसुमभूषितम्, सर्वाभीष्टप्रदं च जानीयात् ॥ ५९ ॥

इदानीं ईशानस्वरूपं निरूप्यते— ईशानं स्फटिकवर्णं जानीयात् । जटामकुटालङ्कृतम्, चतुर्मुखं द्वादशनेत्रम् ॥ ६० ॥

---

1. कण्ट–थ.
2. अस्य पद्यस्य स्थाने–ख. पुस्तके—
   "सव्ये तु टङ्कशूले चाभयं वरदमन्यके ।
   शुक्लवस्त्रधरं चैव शुक्लवस्त्रोत्तरीयकम् ॥
   इति दृश्यते ।
3. विन्द्यात्–क. घ. ट. ठ. ढ. त. थ. द. ध.
4. स्फाटिकं विद्यात्–क. ट. ठ. वर्जं अन्यत्र ।
   स्फाटिकाभं स्यात्–ग. च.
5. चतुर्वक्त्रम्–क.
6. द्वादशाक्ष–ज. थ. ध.
7. समान्वितम्–ग. च.

चतुर्भुजसमायुक्तं सर्वलक्षणसंयुतम् ।
शुक्लाम्बरधरं सौम्यं[1] शुक्लवस्त्रोत्तरीयकम् ॥ ६१ ॥
टङ्कशूलसमायुक्तं वरदाभयसंयुतम्[2] ।
सर्वावयवसंयुक्तं सर्वाभरणभूषितम् ॥ ६२ ॥
दिव्यगन्धानुलिप्ताङ्गं दिव्यपुष्पैरलङ्कृतम्[3] ।
ध्यायेदीशान[4]रूपं तु सद्यो मोक्षप्रदायकम् ॥ ६३ ॥

[तेषु सौम्यासौम्यमूर्तामूर्तादिविभागः]

अघोरं रौद्रमित्युक्तं शेषं[5] सौम्यमुदाहृतम् ।

---

चतुर्भुजम्, सर्वलक्षणसुन्दरम्, शुक्लाम्बरान्तरीयम्, सौम्याकारम्, शुक्लाम्बरोत्तरीयकम् ॥ ६१ ॥

टङ्क-शूलायुधसहितम्, वरद-अभयमुद्रायुतम्, सर्वावयवोपेतम्, समस्ताभरणालङ्कृतम् ॥ ६२ ॥

दिव्यगन्धानुलिप्तावयवम्, दिव्यकुसुमोपशोभितम्, सपदि मुक्तिप्रदम्, इत्येवंविधं ईशानरूपं ध्यायेत् ॥ ६३ ॥

सद्योजातादिषु अघोरस्वरूपमेव उग्ररूपम् । अन्यच्चतुष्टयं सौम्यम् । इदानीं सद्योजातादिमूर्तीनां मूर्तादिपञ्चसादाख्यपिण्डब्रह्मस्वरूपत्वमुच्यते—

---

1. साम्यं–ढ. त.
2. अभयावरदान्वितम्–प.
   अभयं वरदान्वितम्–ग. च.
3. दिव्यपुष्पैरलङ्कृत्य दिव्यगन्धानुलेपनम्–ग. च.
4. एवमीशान–ग. च.
5. चेशं–घ. छ. ट. ठ. ढ. त. द. ध.
   चैशं–थ.
   ईशं–क.

सद्यो[द्यं]मूर्तं[1] विजानीयात् अमूर्तं[2] वामदेवकम् ॥ ६४ ॥

अघोरं कर्तृरूपं स्यात् कर्म तत्पुरुषं भवेत्[3] ।

शिवसादाख्यमीशानं पञ्चतत्त्वात्मकं विदुः ॥ ६५ ॥

पञ्चमूर्त्यात्मकं यत्तत्[4] पिण्डब्रह्माकृतिर्भवेत् ।

[कलाब्रह्मवर्णाः]

एवं पिण्डाकृतिः[5] प्रोक्ता[6] कलारूपमिहोच्यते ॥ ६६ ॥

---

सद्योजातं पिण्डब्रह्म मूर्तसादाख्यतत्त्वम्, वामदेवं पिण्डब्रह्म अमूर्तसादाख्य-तत्त्वम् ॥ ६४ ॥

अघोरं पिण्डब्रह्म कर्तृसादाख्यतत्त्वम्, तत्पुरुषं पिण्डब्रह्म कर्म-सादाख्यतत्त्वम्, ईशानं पिण्डब्रह्म शिवसादाख्यतत्त्वं च विद्यात् । एवं अन्योन्यभेदात् सद्योजातादिपिण्डब्रह्मपञ्चकं भवति ॥ ६५ ॥

पञ्चमूर्तिस्वरूपं यत् शिवतत्त्वमस्ति तदेव पिण्डब्रह्माकृतिर्भवति । पिण्डब्रह्मेति सद्योजातादिरुच्यते ॥

एतावत्पर्यन्तं पिण्डब्रह्म निरूपितम् । इतः परं कलाब्रह्मस्वरूपं निरूप्यते ॥ ६६ ॥

---

1. सद्योजातं–ग. च.
   सद्योमुक्ति–झ.
   सद्योमूर्ति–क. ज. ट. त. थ. द.
2. अमूर्ति–ग. च.
3. अघोरं कर्तृरूपं च पुरुषं कर्मरूपकम्–ग. च वर्जम् ।
   अघोरं रक्तरूपं च पुरुषं कर्मरूपकम्–झ.
4. युक्त–त.
5. पिण्डाकृति–क. ट. ढ. त. थ. द.
6. प्रोक्तं–ग. च.

[ईशानकलावर्णाः]

शङ्खकुन्देन्दुवर्णं च स्फटिक[1]क्षीरसंनिभम्[2] ।
ईशानस्य कलानां तु पञ्चवर्णाः[3] प्रकीर्तिताः[4] ॥ ६७ ॥

[तत्पुरुषकलावर्णाः]

रक्तासितश्वेतपीताः तत्पुरुषकलाः स्मृताः[5] ।

[अघोरकलावर्णाः]

अघोरस्य कलाश्चाष्टौ अञ्जनारुणपीतकाः[6] ॥ ६८ ॥

---

कलाब्रह्मस्वरूपं शङ्ख-कुन्द-कुसुम-इन्दु-स्फटिक-क्षीरवर्णं भवति । इत्थं ईशानस्य कलानां पञ्चवर्णाः उक्ताः ॥ ६७ ॥

तत्पुरुषकलानां रक्त-कृष्ण-शुक्ल-पीतवर्णाः भवन्ति । अघोरकलानां अञ्जन-अरुण-पीतवर्णाः— ॥ ६८ ॥

---

1. स्फाटिकं–क. ख. घ. छ. ज. ढ. त. द. ध.
   स्फटिकं–ट. ठ. प.
   स्फाटिका–थ.
2. सन्निभाः–झ.
3. पञ्चवर्णं–ख. प.
4. प्रसंस्तुताः–च.
   प्रशस्यते–ग.
5. रक्तं कालं–सितं पीतं तुर्यं पुरुषकलानिभाः–क. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
6. अस्यार्धस्य स्थाने–क. घ. छ. ज. ट. ठ. ड. त. थ. द. ध. प. पुस्तकेषु—
   "अञ्जनारुणपीतं च श्यामनीलसितारुणाः ।
   काञ्चनं चाष्टवर्णानि अघोरस्य कलाः स्मृताः ॥"
   इत्यधिकं दृश्यते ॥

श्यामनीलश्वेतरक्तकाञ्चनाभाः प्रकीर्तिताः ।

[वामदेवकलावर्णाः]

जपापीताञ्जन[1]श्याम[2]शुक्ल[3]श्यामाञ्ज[4]नारुणाः[5] ॥ ६९ ॥

[6]अञ्जनं[7] स्फटिकं[8] रक्तं नीलं मरकतं[9] तथा ।

एते वामकलानां तु[10] त्रयोदश समीरिताः[11] ॥ ७० ॥

---

एवं श्याम-नील-श्वेत-रक्त-काञ्चनवर्णाश्च इति अष्टौ वर्णाः भवन्ति ।

जपाकुसुमवर्णः पीतवर्णः अञ्जनवर्णः श्यामवर्णः शुक्लवर्णः श्यामवर्णः अञ्जनवर्णः अरुणवर्णः— ॥ ६९ ॥

—अञ्जनवर्णः स्फटिकवर्णः रक्तवर्णः नीलवर्णः मरकतवर्णः इत्येते त्रयोदश वर्णाः वामदेवकलानां भवन्ति ॥ ७० ॥

---

1. जटापीताञ्जनं–क.
2. श्यामं–क. ख. छ. ज. ठ. ढ. त. थ. प.
3. शुक्लं–क. ख. घ. छ. ज. ट. ठ. ढ. थ. द. प.
4. श्यामञ्ज–छ. ट. ढ.
5. रुणम्–क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
6. एतदर्धस्थाने–झ. पुस्तके—
   " अञ्जनस्फटिकास्राख्यनीलगारुत्मतासकाः ॥ " इति दृश्यते ।
7. अञ्जन–ठ. प.
8. स्फाटिकं–क. ख. ज. ढ. त. थ. द. ध.
9. मरतकं–ज.
10. च–क्ष.
11. त्रयोदशनिभाः स्मृताः–क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.

[सद्योजातकलावर्णाः]

[1]रक्तं[2] सितं[3] तथा नीलं कृष्णं पीतं[4] सकुङ्कुमम् ।
भिन्नाञ्जनं चारुणं च[5] त्वष्टौ सद्यकलाः स्मृताः[6] ॥ ७१ ॥

[सर्वकलामूर्तिसाधारणं रूपम्]

अष्टत्रिंशत्कलाः सर्वाः[7] त्रिणेत्राश्च चतुर्भुजाः[8] । ७२ ॥
अभयं वरदं शूलं परशुं चैव बिभ्रतः[9] ।

---

रक्तवर्णः सितवर्णः नीलवर्णः कृष्णवर्णः पीतवर्णः कुङ्कुमवर्णः भिन्नाञ्जनवर्णः अरुणवर्णः इत्यष्टौ वर्णाः सद्योजातकलानां भवन्ति ॥ ७१ ॥

इदानीं सर्वासां कलामूर्तीनां साधारणं रूपमुच्यते—**सर्वाश्च** अष्टत्रिंशत्संख्याकाः कलामूर्तयः त्रिणयनाः चतुर्भुजाः— ॥ ७२ ॥

—अभयवरदमुद्रे त्रिशूलपरश्वायुधे च धारयन्त्यः सर्वलक्षणोपेताः

---

1. पद्यमिदं–झ. पुस्तके न दृश्यते ।
   एतदर्धस्थाने–ग. च. पुस्तकयोः—
   "सद्योजातकलानां च रक्तमालासितासिताः" इति दृश्यते ।
2. रक्ता–घ. छ. ट. ठ. ढ. त. थ. द. प.
3. पीतं–ध.
4. कृष्णपीतं–ख. ग. ज. ट. ठ. ढ. त. थ. द. ध.
5. भिन्नाञ्जनारुणं चैव–क. ख. झ. ट. थ. ध.
6. सद्योजातकलाः स्मृताः–ग. च.
7. कलारूपाणि सर्वाणि–ग. च.
8. इतःपरं–ग. च. पुस्तकयोः—
   "पीतकुङ्कुमभिन्नाञ्जनारुणाः वर्णकाः स्मृताः" इत्यधिकः पाठो दृश्यते । अस्यार्थः एतत्पूर्वश्लोकेनैव विवृतो वर्तते ।
9. अभयं वरदं चैव शूलं परशुधारिणः–ग. च.

सर्वलक्षणसंयुक्ताः[1] सर्वाभरणभूषिताः[2] ॥ ७३ ॥

[सर्वकलासाधारणाः शक्तयः]

कलारूपेषु सर्वेषु वामाद्याः[3] शक्तयः स्थिताः[4] ।
अष्टत्रिंशत्कलानां तु अ[ष्ट]ष्टत्रिंशच्च[5] शक्तयः ॥ ७४ ॥

[सकलीकरणविधिः, पटलार्थनिगमनं च]

एवं शक्तिसमोपेतं न्यासकाले तु विन्यसेत् ।
मूर्तिः[6] तत्त्वं तथाभूतं[7] पिण्डं चैव कला तथा[8] ॥ ७५ ॥

---

सर्वाभरणालङ्कृताश्च भवन्ति ॥ ७३ ॥

सर्वासु कलामूर्तिषु वामाद्याः शक्तयः वर्तन्ते । अष्टत्रिंशत्कला-मूर्तीनां अष्टत्रिंशत्सङ्ख्याकाः वामाद्याः शक्तयो वर्तन्ते ॥ ७४ ॥

सकलीकरणवेलायां उक्तरीत्या शक्तिसहितं कलाब्रह्म(पञ्चकं) विन्यसेत् । इत्थं च कलाब्रह्म(पञ्चक)न्यासकाले वामादिशक्तिभिः

---

1. संयुक्तं–घ.
   संयुक्त–ठ. त.
2. भूषितः–क.
   भूषितम्–घ.
3. वामाद्यः–छ. ट. ठ.
4. स्मृताः–प.
   तथा–ध.
5. अष्टत्रिंशति–क. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
6. मूर्ति–ग. च.
   मूर्तिं–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
7. ततो भूतं–झ.
8. तथा कला–ग. च.

पञ्च ब्रह्माणि चैतानि[1] सर्वकार्येषु[2] योजयेत् ।
ब्रह्मभेदः समाख्यातश्चाङ्ग[3]भेदमथ[4] शृणु ॥ ७६ ॥

इति श्रीवातुलतन्त्रे शुद्धाख्ये सहस्रग्रन्थ-
संहितायां ब्रह्मभेदो नाम
सप्तमः पटलः

— o —

---

अकारादिवर्णैः षोडशचन्द्रकलाभिः द्वादशसौरकलाभिः सह दशवह्निकलाभिः सह तत्तत्स्थाने अङ्गुष्ठादिकनिष्ठान्तं अङ्गुलीभिः न्यासं कुर्यात् ॥

मूर्तिब्रह्म, तत्त्वब्रह्म, भूतब्रह्म, पिण्डब्रह्म, कलाब्रह्म— ॥ ७५ ॥

—इति पूर्वोक्तान्येतानि पञ्च ब्रह्माणि समस्तशिवकार्येषु संयोजयेत् । हे सुब्रह्मण्य! पूर्वोक्तरीत्या मूर्तिब्रह्मादिपञ्चब्रह्मभेदः निरूपितः ।
इतः परं अङ्गभेदं वदामि, श्रुत्वा अवधारय ॥ ७६ ॥

इति श्रीवातुलशुद्धाख्यतन्त्रसहस्रग्रन्थ-
संहिताव्याख्यायां ब्रह्मभेदो नाम
सप्तमः पटलः

—o—

---

1. चोक्तानि–ज.
2. सर्वकार्याणि–थ.
सर्वकालेषु–क.
3. ब्रह्मभेदमिदं प्रोक्तमङ्ग–क. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध, प.
ब्रह्मभेदो मया प्रोक्तः अङ्ग–ख.
ब्रह्मभेदमयं प्रोक्तं–झ.
4. मतः–थ. ध.

## अथ अङ्गभेदो नाम

## अष्टमः पटलः

[पटलार्थसूचनपूर्वकं मङ्गलाचरणम्]

[1] ब्रह्मात्म[दि]कं विश्वजगत्समूहं [2]
अङ्गीकृतत्वात् परमेश्वरस्य ।
सर्वाणि चाङ्गानि भवन्ति तस्मात्
अङ्गेश्वरं [3] तं [4] सततं भजामि [5] ॥ १ ॥

---

(प्रत्येकाञ्चितषड्भेदान् शिवाङ्गादीन् मनूत्तमान् ।
सामान्याङ्गान्तकांस्तांस्तु शिवे दीक्षादिकास्वपि ॥
विनियोज्य यथातन्त्रं सम्यगाराधितः शिवः ।
सुप्रसन्नो भवेत् सोऽयं श्रेयसे भूयसेऽस्तु नः ॥

ब्रह्मादिसमस्तचराचरात्मकजगत्समूहोऽपि परमेश्वरस्य शिवस्य अङ्ग-मित्यङ्गीकारात्—चराचरात्मकः सर्वोऽपि जगत्समूहः परशिवस्य अङ्गं भवति। अतः स्वाङ्गभूतस्य समस्तस्य जगतः परमेश्वरः आश्रयः सन् अङ्गेश्वरः भवति। तस्मात् तादृशं परमेश्वरं सेवे इत्यर्थः ॥ १ ॥)

---

1. पद्यमिदं—ख. झ. पुस्तकयोः न दृश्यते।
2. जगत्स्वरूपं—ख. झ. थ. ब. भ.
3. अङ्गीश्वरं—छ. ठ.
4. त्वां—ढ. द.
5. नमामि—ध.

[अङ्गविभागः]

[1] अतः परं प्रवक्ष्येऽहं [2] अङ्गभेदविधिं परम् ।
अङ्गं [3] षड्भेदमित्युक्तं षडङ्गं तदिहोच्यते [4] ॥ २ ॥
षडङ्गम[ङ्गान्य]ङ्गभेदाश्च [5] षट्त्रिंशदिति [6] ते स्मृताः [7] ।

---

अतः ब्रह्मभेदपटलस्योपरि परं श्रेष्ठम् अङ्गभेदविधिं क्रमादङ्गानां भेदप्रकारम् अहं प्रवक्ष्ये कथयामि । अङ्गं षड्भेदमिति तदङ्गानि षड्विधानि भवन्तीति उक्तम् । तत् तस्मात् इह अस्मिन् अष्टमपटले षडङ्गं उच्यते तानि षडङ्गानि निरूप्यन्ते ॥ २ ॥

षडङ्गं अङ्गं षड्विधं भवति । अङ्गभेदाश्च एकैकस्याप्यङ्गस्य भेदाः सन्ति । ते षट्त्रिंशदिति स्मृताः ते च भेदाः आहत्य षट्त्रिंशत्संख्याकाः

---

1. अत्र–फ. पुस्तके—
   "अङ्गभेदं प्रवक्ष्यामि शृणु षण्मुख! सादरम् ।
   अथ षडाङ्गदेकैकं (?) षट्त्रिंशद्गतः स्मृतः ॥
   तेषाङ्गेनाक्रमेणैव (?) लक्ष्यते सम्यगन्विताः ।
   इति पठित्वा ततः परं "शिवाङ्गं" इत्यादिपाठः वर्तते ॥
2. प्रवक्ष्यामि–क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. प. फ.
3. अङ्ग–छ. ठ. ढ. त. द.
4. तस्मादङ्गं षडुच्यते–ध.
   तस्मादङ्गं तदुच्यते–ख. ज.
   तस्मात् षडङ्गमुच्यते–क. घ. छ. ज. ट. ठ. ढ. त. थ. द. प.
5. भेदानि–क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.
6. षट्त्रिंशद्भेदि–ध.
   षट्त्रिंशति–ज.
7. तानि तु–क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.

एभिर्भेदैः[1] समायुक्तं अङ्गं[2] षट्त्रिंशदुच्यते[3] ॥ ३ ॥

[अङ्गानां नामानि]

तेषां तु[4] लक्षणं वक्ष्ये समासात् शृणु षण्मुख ।
शिवाङ्गं चैव भूताङ्गं कूटाङ्गं[5] च तथैव च ॥ ४ ॥
विद्याङ्गं चैव[6] शक्त्यङ्गं[7] सामान्याङ्गं तथैव च[8] ।
एतानि चाङ्गनामानि शिवाङ्गानि षडा सह ॥ ५ ॥

---

भवन्ति । एभिर्भेदैः समायुक्तं अङ्गं पूर्वोक्तभेदैरुपेतं अङ्गं षट्त्रिंशत् षट्त्रिंशद्भेदयुक्तमिति उच्यते ॥ ३ ॥

हे षण्मुख ! तेषां षण्णां अङ्गानां लक्षणं सङ्ग्रहेण कथयामि शृणु । शिवाङ्गं, भूताङ्गं, कूटाङ्गम्— ॥ ४ ॥

—विद्याङ्गं, शक्त्यङ्गं, सामान्याङ्गं चेत्येतानि षडङ्गानि एतानि षडा सह शिवाक्षराभिधप्रकृत्यक्षरावयवभूतषड्विकृत्यक्षरैः सह वर्तन्ते ।

षडा सह इत्युक्ते प्रकृत्यक्षररूपब्रह्मणः अङ्गभूताः विकृत्यक्षराभिधान-दीर्घाः इत्यर्थः । नादब्रह्मैव सर्वाक्षराण्यध्यास्य वर्तते इत्यतः सर्वाण्यप्यङ्गानि शिवाङ्गानीत्युच्यन्ते ॥ ५ ॥

---

1. भेदे-क.
2. अङ्ग-छ. प.
3. षट्त्रिंशदिति क्रमात्—क. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
4. एतेषां-ध.
5. विद्याङ्गं-ग. च.
6. विद्याङ्गमथ-फ.
   कूटाङ्गं चैव-ग. च.
7. शक्त्याङ्गं-द. प.
8. इतः परं-फ. पुस्तके—'नवार्णविकृतिष्वासु' (८) इत्यारभ्य पाठो दृश्यते ।

[अङ्गानां क्रमनिर्णयः]

शिवाङ्गं प्रथमं विद्यात् भूताङ्गं च द्वितीयकम् ।
कूटाङ्गं च तृतीयं वै विद्याङ्गं च चतुर्थकम् ॥ ६ ॥

शक्त्यङ्गं पञ्चमं विद्यात् सामान्याङ्गं च षष्ठकम् ।

[तत्र शिवाङ्गस्य प्रथमस्य निरूपणम्]

एतेषां चैवमङ्गानां[1] शिवाङ्गं पूर्वमुच्यते[2] ॥ ७ ॥

नवार्णवि[3]कृतिष्वासु[4] तुर्यं पञ्चममष्टमम्[5] ।

---

शिवाङ्गं प्रथमम्, भूताङ्गं द्वितीयम्, कूटाङ्गं तृतीयम्, विद्याङ्गं चतुर्थम्— ॥ ६ ॥

—शक्त्यङ्गं पञ्चमम्, सामान्याङ्गं च षष्ठं विद्यात् । एतेषां चाङ्गानां मध्ये शिवाङ्गं पूर्वमभिधीयते ॥ ७ ॥

आसु नवार्णविकृतिषु विकृत्यक्षरनवकेषु तुर्यं चतुर्थं ऋकारम्, पञ्चमं ऌकारम्, अष्टमं अंकारं च त्रीणि वर्णानि सन्त्यज्य एतानि

---

1. चैव अङ्गानां–ज.
2. पूर्वमिष्यते-ग. च. ज.
3. नवार्णे वि–ध.
   नवाङ्गवि–प.
   नवार्णं वि–क. ट.
   नवार्णा वि–ठ.
   नववर्णा–छ.
4. ष्वेषु–क. ग. घ. च. छ. ज. ट. ठ. ड. ढ. त. थ. द. प. फ.
5. पञ्चमषष्ठकम्–ध.
   पञ्चमसप्तमम्–फ.

त्रीणि वर्णानि संत्यज्य [1] शेषाः [2] षट् परसंयुताः [3] ॥ ८ ॥
कार्यकारणसंयुक्ताः [4] सर्वेषां च षडानन [5] ! ।

[शिवाङ्गस्य षोढा विभागः]

[6] तेषां च नामधेयानि वक्ष्यामि शृणु षण्मुख ! ॥ ९ ॥

---

त्रीणि अक्षराणि त्यक्त्वा, शेषाः षट् आ, ई, ऊ, ऐ, औ, अः, इति षड्वर्णाः परसंयुताः पराख्यहकारेण संयोजनीयाः ॥ ८ ॥

हे षडानन ! हे सुब्रह्मण्य ! सर्वेषां पूर्वोक्तषड्वर्णानां मध्ये अःकारं त्यक्त्वा शिष्टाः सर्वेऽपि कार्यकारणसंयुक्ताः बिन्दुसहिताः भवन्ति इति शेषः । अस्त्रव्यतिरिक्ताङ्गानामेव बिन्दुयोजनं कर्तव्यमिति अभिप्रायः । एवं योजना कृता चेत् हृदयाद्यस्त्रान्तषडङ्गानि भवन्ति । इत्थं च हां हीं हूं हैं हौं हः इति रेफवर्जितानि तान्त्रिकाणि अङ्गबीजानि भवन्ति । एतान्येव ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति रेफयुक्तानि वैदिकानि भवन्ति । न्यासत्रितयेऽपि तान्त्रिकवैदिकयोरभेद एव । हे षण्मुख ! तेषां पूर्वोक्त-शिवाङ्गानां नामधेयानि अभिधानानि वक्ष्यामि कथयामि, शृणु अवधारय ॥ ९ ॥

---

1. सन्त्यक्त्वा–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
   संन्यस्य–ज.
2. शेषः–ख. ध.
   शेषे–फ.
3. षड्वरवर्णयुक्–ध.
   षट्पदवर्णयुक्–छ.
   षट्परवर्णयुक्–ग. च.
4. संयुक्तं–ग. च. फ.
5. षड्वर्णानामनुक्रमात्–झ.
6. पद्यार्धमिदं–क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प. फ. पुस्तकेषु न दृश्यते ।

प्रथमं हृदयं[1] विद्यात्[2] द्वितीयं तु शिरो भवेत् ।
तृतीयं च शिखां विद्यात्[3] चतुर्थं कवचं भवेत् ॥ १० ॥
पञ्चमं नेत्रत्रयं स्यात्[4] षष्ठमस्त्रमुदाहृतम्[5] ।
एतच्छिवाङ्ग[6]नामानि कीर्तितानि क्रमाद्विदुः[7] ॥ ११ ॥

---

पूर्वोक्तेषु षट्सु शिवाङ्गेषु प्रथमं हृदयं विद्यात् । हां अथवा ह्रां इति प्रथमबीजं हृदयबीजं जानीयात् । द्वितीयं तु शिरो भवेत् हीं अथवा ह्रीं इति द्वितीयबीजं शिरोबीजं भवति । तृतीयं तु शिखां विद्यात् हं अथवा ह्रूं इति तृतीयबीजं शिखायोगं जानीयात् । चतुर्थं कवचं भवेत् हैं अथवा ह्रैं इति चतुर्थबीजं कवचबीजं भवति ॥ १० ॥

पञ्चमं नेत्रत्रयं स्यात् हौं अथवा ह्रौं इति पञ्चमबीजं नेत्रत्रयबीजं भवति । षष्ठं अस्त्रं उदाहृतम् हः अथवा ह्रः इति षष्ठबीजं अस्त्रबीजं कथितम् । पूर्वोक्तशिवाङ्गानां उक्तरीत्या नामानि क्रमात् अभिहितानीति जानीयात् ॥ ११ ॥

---

1. हृदयं प्रथमं–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प. फ.
2. विन्द्यात्–क. घ. ट. ठ. ढ. त. थ. द. ध. प.
3. विन्द्यात्–क. घ. ट. ठ. ढ. त. थ. द. ध. प.
4. नेत्रमित्युक्तम्–झ.
   नेत्रयुग्मं च–ग. च.
   नेत्रमुद्दिष्टं–फ.
   नेत्रत्रयं चैव–थ.
5. अस्त्रं षष्ठमुदाहृतं–क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध.
   षष्ठं चास्त्रमुदाहृतम्–झ.
   षष्ठमस्त्रमुदीरितम्–फ.
6. एते शिवाङ्ग–ग. च.
7. शिवाङ्गनामान्येतानि फणितानि क्रमेण तु–फ.

[तेषां सिद्धिक्रमः]

आदौ प्रणव[1]मुच्चार्य[2] शिवार्णं[3] तदनन्तरम् ।
अभिधानं[4] चतुर्थ्यन्तं[5] नमस्कारादिभिर्युतम्[6] ॥ १२ ॥

---

**आदौ** प्रथमतः **प्रणवं** ओङ्कारं **उच्चार्य, तदनन्तरं** पश्चात **शिवार्णं** तान्त्रिकं वैदिकं वा शिवाङ्गबीजं हकारम्, तदुपरि **नमस्कारादिभिर्युतं अभिधानं चतुर्थ्यन्तं** क्रमात् नमः स्वस्ति स्वाहा वषट् हुंफट् इत्येतैर्युक्तं हृदयादिनाम्नां चतुर्थ्यन्तरूपं उच्चरेत । एवं चेत् हृदयाद्यङ्गमन्त्राः सिद्ध्यन्ति ॥

तद्यथा— वैदिके—ओं ह्रां हृदयाय नमः ।
ओं ह्रीं शिरसे स्वाहा ।
ओं ह्रूं शिखायै वौषट् ।
ओं ह्रैं कवचाय हुम् ।
ओं ह्रौं नेत्रत्रयाय वौषट् ।
ओं ह्रः अस्त्राय फट् ॥ इति ॥

तान्त्रिके—ओं हां हृदयाय नमः ।
ओं हीं शिरसे स्वाहा ।
ओं हूं शिखायै वौषट् ।
ओं हैं कवचाय हुम् ।
ओं हौं नेत्रत्रयाय वौषट् ।
ओं हः अस्त्राय फट् ॥ इति ॥ १२ ॥

---

1. प्रणम–छ.
2. मुच्चार्यं–क.
3. जीवार्णं–क. घ. छ. ट. ढ. त. थ. फ.
4. अभिधान–ज.
5. चतुर्थं तु–क.
6. दिसंयुतम्–फ.

[तत्र हृन्मन्त्रपल्लवम्]

(¹स्रष्टुः विंशतिकं² बीजं पञ्चविंशतिकं ततः³ ।
द्व्यक्षरं सविसर्गं च हृन्मन्त्रे⁴ पल्लवं स्मृतम् ॥ १ ॥

[शिरोमन्त्रपल्लवम्]

प्राणस्य सप्तमे⁵ ह्यापः द्वितीयस्वरयुक् क्रमात्⁶ ।

---

(पल्लवोद्धरणं क्रियासारे वक्ष्यति— ब्रह्मबीजमित्यादिना । प्रकृते— **स्रष्टुः** ब्रह्मणः सकाशात् प्राजापत्यबीजात् ककारात् **विंशतिकं** विंशतितमं बीजम् नकारम्, **ततः** नकारोद्धारानन्तरम्, **पञ्चविंशतिकं** ककारात् पञ्चविंशं बीजं मकारम्, **द्व्यक्षरं सविसर्गं च** विसर्गसहितं नमः इत्यक्षरद्वयं **हृन्मन्त्रे** हृदयमन्त्रे **पल्लवं स्मृतं** पल्लवं भवतीति स्मृतम् भवति ॥ १ ॥

**प्राणस्य** वायुबीजयकारस्य **सप्तमे** सप्तमस्थानीयसकारबीजे **ह्यापः** वकाराख्यं अब्बीजं संयोज्येति शेषः । **क्रमात्** क्रमशः तत् स्व इति बीजं

---

1. 'स्रष्टुर्विंशतिकं' इत्यारभ्य 'पल्लवं चेति कीर्तितम्' इत्यन्तो भागः-ख. ध. फ. पुस्तकेषु न दृश्यते ।
2. प्रष्टुर्विंशति तं-ट.
   सृष्टिविंशतिकं-ग. च. थ.
   सृष्टिर्विंशतिकं-ठ. ढ.
   स्रष्टं विंशतिकं-छ.
   स्रष्टविंशतिकं-द.
3. तथा-ट.
4. हृन्मन्त्र-क.
   हृन्नेत्र-थ.
   हृन्मन्त्रं-घ. छ. ट. ढ. त. द.
   हृन्मन्त्रः-ठ.
5. सप्तमं-ग. च.
6. युक्ताद्द्वितीयस्वरं क्रमात्-क. घ. छ. ट. ठ. ढ. त. थ. द.

[1] खे [2] द्वितीय[3]स्वरं तद्वत् [4] शिरोमन्त्रस्य पल्लवम् ॥ २ ॥

[शिखामन्त्रपल्लवम्]

पार्थिवान्ताक्षरं यस्य तृतीयं [5] चाक्षरं ततः ।
दशान्त[6]व्यञ्जनं तद्वत् शिखामन्त्रस्य पल्लवम् ॥ ३ ॥

[कवचमन्त्रपल्लवम्]

चतुर्थान्तं स्वरं बिन्दुनादौ च गगनाक्षरे ।
युञ्जयात् कवचमन्त्रस्य पल्लवं परिकीर्तितम् ॥ ४ ॥

---

**द्वितीयस्वरयुक्** द्वितीयस्वराख्येन आकारेण सहितं कुर्यादिति शेषः । एवं चेत् स्वा इति भवति । **खे** व्योमबीजे हकारे **तद्वत्** पूर्ववत् **द्वितीयस्वरं** आकारम्, योजयेदिति शेषः । इत्थं च आहत्य स्वाहा इति **शिरोमन्त्रस्य** पल्लवं **शिरोमन्त्रसम्बन्धि** पल्लवं भवति ॥ २ ॥

**पार्थिवान्ताक्षरं** पृथिवीबीजलकारस्योपरितनवकारं ततः **यस्य तृतीय चाक्षरं** वकारोपरितनतृतीयाक्षरषकारं च उद्धृत्य, ततः द्वावपि आकारेण संयोज्य, **दशान्तव्यञ्जनं** कवर्गचवर्गाक्षरोपरितनं टकारं **तद्वत्** पूर्ववत् उद्धरेत् । एवं चेत् वषट् इति **शिखामन्त्रस्य पल्लवं** शिखामन्त्रसम्बन्धिपल्लवं भवति ॥ ३ ॥

**गगनाक्षरे** हकारे **चतुर्थान्तं स्वरम्**, पञ्चमस्वरं उकारम्, **बिन्दुनादौ च** अनुस्वारं च **युञ्जयात्** योजयेत् । एवं चेत् हुं इति

---

1. पद्यार्धमिदं—प. पुस्तके न दृश्यते ।
2. ख—थ.
3. द्वितीयं—क.
4. तत्—त.
5. पार्थिवान्तं ततस्तस्मात् त्रितयं—थ.
6. दशान्तं—घ. छ. ट. ढ. त. थ. द. प.
   दशान्त्य—ठ.

[नेत्रमन्त्रपल्लवम्]

बीजद्वये शिखायाश्च पल्लवे पूर्वमक्षरम् ।
चतुर्दशस्वरोपेतं नेत्रमन्त्रस्य पल्लवम् ॥ ५ ॥

[अस्त्रमन्त्रपल्लवम्]

[1] एकविंशतिवर्णान्तं[2] दशान्त[3]व्यञ्जनं तथा[4] ।
एतदायुधमन्त्रस्य पल्लवं चेति कीर्तितम् ॥ ६ ॥)

---

भवति । एतद्बीजं कवचमन्त्रस्य पल्लवं परिकीर्तितम् कवचमन्त्रपल्लवमित्युक्तम् ॥ ४ ॥

शिखायाश्च शिखामन्त्रस्य पल्लवे बीजद्वये पल्लवभूतवकारषकारद्वये पूर्वमक्षरं पूर्वाक्षरभूतवकारबीजम् चतुर्दशस्वरोपेतं चतुर्दशस्वरभूत— औकारयुक्तं चेत् वौषट् इति नेत्रमन्त्रस्य पल्लवं नेत्रमन्त्रसम्बन्धि पल्लवं भवति ॥ ५ ॥

एकविंशतिवर्णान्तं ककारादिव्यञ्जनेषु द्वाविंशाक्षरभूतं फकारबीजम्, अकारेण सहितम्, तथा दशान्तव्यञ्जनं ककारादिव्यञ्जनेषु एकादशव्यञ्जनभूतं टकाराख्यबीजं च क्रमात् उद्धृतं चेत् फट् इति भवति । एतत् आयुधमन्त्रस्य अस्त्रमन्त्रस्य पल्लवं चेति कीर्तितम् पल्लवमित्युक्तं भवति ॥ ६ ॥)

---

1. पद्यार्धमिदं ट पुस्तके न दृश्यते ।
2. कर्णां तु—क.
   कर्णान्तं—घ. छ. ट. ठ. ढ. त. द.
3. दशान्त—घ. ठ. त. प.
4. ततः—क. घ. छ. ट. ठ. ढ. त. द. प.

[मन्त्रे हृदयादिविभागक्रमः]

नमोऽन्तं हृदयं विद्यात्[1] स्वाहान्तं च शिरो भवेत्[2] ।
वषडन्तं[3] शिखा ज्ञेया[4] हुंकारं[रः] कवचं भवेत्[5] ॥ १३ ॥
[6] वौषडन्तं तु नेत्रं स्यात्[7] फट्कारश्चास्त्रमन्त्रतः[8] ।

---

नमोऽन्तं हृदयं विद्यात् नमोऽन्तं मन्त्रं हृदयाख्यं जानीयात् । स्वाहान्तं च शिरो भवेत् स्वाहान्तं मन्त्रं शिरस्संज्ञं भवति । वषडन्तं शिखा ज्ञेया वषडन्तं मन्त्रं शिखासंज्ञं ज्ञातव्यम् । हुङ्कारं कवचं भवेत् हुङ्करान्तमन्त्रं कवचसंज्ञं भवति ॥ १३ ॥

वौषडन्तं तु नेत्रं स्यात् वौषडन्तं मन्त्रं नेत्रसंज्ञकं भवति । फट्कारश्चास्त्रमन्त्रतः फट्कारः अस्त्रमन्त्रसंज्ञानिमित्तभूतः । सार्वविभक्तिक-स्तसिरिति प्रथमार्थे तसौ अस्त्रमन्त्रः इति वा, भावप्रधाननिर्देशे अस्त्रमन्त्रत्वतः

---

1. विन्द्यात्—क. घ. ट. ठ. ढ. त. द. ध. प.
2. शिरसो भवेत्—क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प. फ.
3. वौषट्कारं—फ.
4. ज्ञेयम्—क. त. थ. फ.
5. कवचं भवेत्—झ.
   कवचं स्मृतम्—ध.
   कवचाय तु—फ.
6. 'वौषडन्तं' इत्यारभ्य 'प्रथमं बीजमुच्यते' इत्यन्तो भागः—प. पुस्तके न दृश्यते ।
7. वौषण्णेत्रत्रयं विद्यात्—ख. झ.
   वौषण्णेत्रत्रयस्यान्तं—थ.
   वौषण्णेत्रत्रयं स्यात्तु—ध.
   वौषण्णेत्रत्रयं स्याच्च-घ. ठ. ढ. द.
   वौषट्नेत्रत्रयान्तं स्यात्—क. ग. च. छ. ज. ट. ड. त. थ. द. प. ब. भ.
8. फट्कारः शस्त्रमन्त्रतः—थ.

[द्वितीयभूताङ्गनिरूपणम्]

एवं शिवाङ्गमुद्दिष्टं[1] भूताङ्गं च ततः शृणु[2] ॥ १४ ॥

[तत्र प्रथमं बीजम्]

पार्थिवं[3] जीवसंयुक्तं[4] द्वितीयस्वरभूषितम्[5] ।
बिन्दुनादसमायुक्तं प्रथमं बीजमुच्यते[6] ॥ १५ ॥

---

इति वा अर्थोऽपि सिद्ध्यति । **एवं शिवाङ्गं** निरूपितम् । इतः परं **भूताङ्गं** निरूप्यते ॥ १४ ॥

**पार्थिवं** ल इति पृथिवीबीजम्, **जीवसंयुक्तं** जीवाभिधहकारान्तर्गतत्वेन हकारसंयुक्तं भवति । ततश्च तत् लकारसहितहकारबीजम्, **द्वितीयस्वरभूषितं** द्वितीयस्वरभूतेन आकारेण सहितम्, **बिन्दुनादसमायुक्तं** बिन्दुनादाख्यानुस्वारेण सहितं उद्धृतं चेत् **प्रथमं बीजं** ह्लामिति आदिमं भूताङ्गबीजमिति **उच्यते** कथ्यते ॥

अत्र—"**पार्थिवं** बीजं लकारः, **जीवो** हकारः, **द्वितीयस्वरः** आकारः शिवशक्तिः **बिन्दुनादः** एते सम्भूय 'ह्लां' इति भवति ।" इति मुद्रितव्याख्या ॥ १५ ॥

---

1. मित्युक्तम्–ग. च.
2. भूताङ्गानि तथोच्यते–ग. च.
   भूताङ्गानि तु चोच्यते–फ.
3. वाग्भवं–ध.
4. पार्थिवाग्नीवसंयुक्तं–थ.
   पार्थिवं बीजमित्युक्तं–ज.
   पर्थिवं बीजसंयुक्तं–ध.
5. द्वितीयं स्वरसंयुतम्–ग. च.
   द्वितीयः स्वरभूषितम्–ख. (पा).
6. मीरितम्–झ.

[द्वितीयं बीजम्]

[1] शिवार्णं [2] जीवनोपेतं चतुर्थ[3]स्वरभूषितम् ।
शिवशक्तिसमायुक्तं द्वितीयं [4] बीजमुच्यते [5] ॥ १६ ॥

[तृतीयं बीजम्]

पञ्चमं षष्ठसंयुक्तं [6] पञ्चमान्त[7]कलायुतम् [8] ।
आधाराधेयसंयुक्तं तृतीयं [9] बीजमुच्यते ॥ १७ ॥

---

**जीवनोपेतं** वरुणबीजभूतवकारभूषितम्, **शिवार्णं** हकारबीजम्, **चतुर्थस्वरभूषितं** चतुर्थस्वरेण ईकारेण सहितम्, **शिवशक्तिसमायुक्तं** शिवशक्तिरूपबिन्दुनादसहितम्, उद्धृतं चेत् **द्वितीयं बीजमुच्यते** ह्वीं इति द्वितीयं भूताङ्गबीजं भवति ॥

अत्र—**शिवार्णं** हकारः, **जीवनं** वकारः, **चतुर्थस्वरः** ईकारः, **शिवशक्तिः** नादबिन्दुः, एते सम्भूय ह्वीं इति भवति एवं **द्वितीयबीजं** भवति—इति मुद्रितव्याख्या ॥ १६ ॥

**षष्ठसंयुक्तं** षष्ठबीजभूतरेफेण सहितम्, **पञ्चमं** पञ्चमबीजभूतहकार-बीजम्, **पञ्चमान्तकलायुतं** पञ्चमकलात्मकोकारसमीपवर्तिना ऊकारबीजेन-

---

1. पद्यमिदं–फ. पुस्तके न दृश्यते ।
2. शिवाङ्गं–त.
3. चतुर्थं–घ. द.
4. द्वितीयं–घ.
5. जीव उच्यते–ढ. द.
   बीजमीरितम्–झ.
6. मन्त्रसंयुक्तं–फ.
7. पञ्चमान्तं–ठ.
   पञ्चमान्त्र–फ.
8. कलान्वितम्–ख. ठ.
9. द्वितीयं–फ.

[चतुर्थं बीजम्]

भूतान्तमनिलोपेतं[1] पञ्चसप्तकलान्वितम् ।
परा ररसमायुक्तं चतुर्थं बीजमुच्यते ॥ १८ ॥

[पञ्चमं बीजम्]

त त्त्वान्तं[2] तत्त्वसंयुक्तं कलान्तेन[3] समन्वितम्[4] ।
कार्यकारणसंयुक्तं पञ्चमं बीजमुच्यते[5] ॥ १९ ॥

---

सहितम्, आधाराधेयसंयुक्तं आधाराधेयाख्यबिन्दुनादसहितं च उद्धृतं चेत् तृतीयं बीजमुच्यते ह्वं इति तृतीयं भूताङ्गबीजं भवति ॥

अत्र—पञ्चमं हकारः, षष्ठं रेफः, पञ्चमान्तकला अकारः, आधाराधेयं बिन्दुनादः, एते सम्भूय ह्रूं इति तृतीयबीजं स्यात्—इति मुद्रितव्याख्या ॥ १७ ॥

भूतान्तं हकारः अनिलबीजं यकारः, पञ्चसप्तकला ऐकारः, बिन्दुः परापरम्, इत्येते क्रमात् सम्भूय ह्यैं इति चतुर्थं भूताङ्गबीजं भवति ॥ १८ ॥

तत्त्वान्तं हकारबीजम्, तत्त्वसंयुक्तं तत्त्वसंज्ञकहकारेण सहितम्, कलान्तं औकारः, कार्यकारणं बिन्दुः इत्येते क्रमात् सम्भूय ह्हौं इति पञ्चमभूताङ्गबीजं भवति ॥ १९ ॥

---

1. धेजनान्तमनिलोपेतं–प.
   भूतान्तमनलोपेतं–फ.
2. तत्त्वानां–फ.
3. चतुर्दश–ख. झ.
4. कलान्वितम्–ख. झ.
   समन्वितम्–फ.
5. बीजमीरितम्–झ.

[षष्ठं बीजम्]

शक्त्यन्तं शिवसंयुक्तं आदिबीजं[1] कलान्वितम्[2] ।
तयोर्मध्यगतो[3] बिन्दुः[4] षष्ठं[5] बीजमुदाहृतम्[6] ॥ २० ॥

[भूताङ्गस्थानम्]

पञ्चभिः ग्रन्थिभिर्युक्तं[7] छेद्यमन्त्रेण[8] चात्मनि ।

---

**शिवसंयुक्तं** शिबीजभूतहकारेण सहितम्, **शक्त्यन्तं** सकारसमीपवर्तिहकारम्, उद्धृत्येति शेषः । **आदिबीजं** प्रथमहकारम् **कलान्वितं** अकारसहितम्, कुर्यादिति शेषः । **तयोः** उभयहकारयोर्मध्यगतः **बिन्दुः** मध्ये बिन्दुर्भवति । तदानीं हं ह् इति षष्ठं भूताङ्गबीजं भवति । (अत्र 'हं ह' इति मुद्रिते वर्तते) ॥ २० ॥

**छेद्यमन्त्रेण** अस्त्रमन्त्रेण **पञ्चभिः ग्रन्थिभिः** पञ्चविधभूतग्रन्थिभिश्च

---

1. बीज–फ.
   शक्ति–ध.
2. कलायुतम्–फ,
3. मध्येगतं–क.
   मध्यगतं–घ. छ. ज. झ. ट. ठ. ढ. त. थ. द.
4. बिन्दु–क. घ. छ. ट. ठ. ढ. त. द. प.
   बिन्दुं–झ. थ.
5. षष्ठमं- क. घ. छ. ज. ट. ठ. ढ. त. थ. द. प.
   पञ्चमं–ध.
6. बीजमुच्यते–क. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
7. पञ्चवर्गादिभिर्युक्तम्–प.
   पञ्चमग्रन्थिसंयुक्तम्–ध. फ.
8. भेद्यमन्त्रेण–च. ध.
   छिद्यमन्त्रेण–प.
   शिवमन्त्रेण–छ.
   चोक्तमन्त्रेण–फ.

[तृतीयकूटाङ्गनिरूपणम्]

एवं भूताङ्गमाख्यातं कूटाङ्गानि ततः शृणु ॥ २१ ॥

प्रथमस्य [1] द्वितीयं तु [2] चतुर्थं पञ्चमान्तकम् [3] ।
रुद्रान्तं [4] रुद्रतुर्याणं [5] अन्तं कूटाक्षरेण युक् [6] ॥ २२ ॥

बिन्दुनादसमायुक्तं कूटाङ्गमिदमीरितम् [7] ।

---

युक्तम्, इदं भूताङ्गबीजं आत्मनि स्थितं आत्मस्वरूपे वर्तमानम् । एवं पूर्वश्लोकोक्तरीत्या भूताङ्गं निरूपितम् । ततः तदनन्तरं इदानीं कूटाङ्गानि शृणु ॥ २१ ॥

प्रथमस्य प्रथमस्वरवर्गस्य द्वितीयं अकारात्मकद्वितीयबीजम्, तथैव चतुर्थं ईकारबीजम्, तथैव पञ्चमान्तकं ऊकारबीजम्, रुद्रान्तं ऐकार-बीजम्, रुद्रतुर्याणं औकारबीजं अन्तं विसर्गबीजं च प्रत्येकं कूटाक्षरेण युक् कूटाक्षरभूतैकपञ्चाशदक्षरात्मकक्षकारेण योजितम्— ॥ २२ ॥

बिन्दुनादसमायुक्तं तदेव कूटाक्षरं बिन्दुनादाख्यानुस्वारेण च योजितं चेत् इदं कूटाङ्गं ईरितम्—इदं कूटाङ्गबीजमित्युक्तं भवति ।

---

1. प्रथमं स्यात्–ग. च. छ. ज. झ.
2. स्यात्–ध.
   च–फ.
3. पञ्चमात्मकम्–झ.
4. रुद्राङ्गं–फ.
5. रुद्रतुर्यं च–ग. च. ज.
   रुद्रमध्यं च–ध.
   रुद्रतुर्यं तु–फ.
6. मन्त्रकूटाक्षरेण यत्–ज. थ.
   मन्त्रकूटाक्षरेण युत्–क.
7. कूटाङ्गानि स्फुटानि वै–फ.

[चतुर्थविद्याङ्गनिरूपणम्]

[1]एवं कूटाङ्गमित्युक्तं विद्याङ्गानि ततः शृणु ॥ २३ ॥
प्रकारं[2] तु समुद्धृत्य तकारं तु समुद्धरेत्[3] ।
दकारोपेतराकारं[4] यकारं च नमोऽन्तकम्[5] ॥ २४ ॥

---

अत्र अन्तमिति विसर्गोक्त्यनन्तरं 'बिन्दुनादसमायुक्तं' इति अनुस्वार-कथनेऽपि अनुस्वारस्य विसर्गानन्तरं प्राप्त्यभावात् विसर्गानन्तरं अनुस्वारः न प्रवर्तते ।

एवं च क्षां क्षीं क्षूं क्षैं क्षौं क्षः इति षट् कूटाङ्गबीजानि भवन्ति । एवं उक्तप्रकारेण कूटाङ्गमित्युक्तं कूटाङ्गं कथितम् । ततः तस्योपरि विद्याङ्गानि शृणु इति षडाननं अवबोधयति ॥ २३ ॥

---

1. पद्यार्धमिदं–फ. पुस्तके न दृश्यते ।
2. प्राकारं–क. ख. द. प.
3. तकारं तु समुद्धरेत् इत्यारभ्य 'स्वाहाकारसमायुतम्' इत्यन्तो भागः–ध. पुस्तके न दृश्यते ।
   एतदनन्तरं 'दकारोपेते' त्यतः प्राक्–ग. च. पुस्तकयोः—
   " नकारपूर्वकं शस्तं हकारं तु समुद्धरेत् । "
   इति पद्यार्धमधिकं दृश्यते ॥
4. दकारोपेतरंकारं–झ.
   ,, रकारं–घ.
   ,, वाकारं–छ.
   तकारोपेत एकारं–झ.
5. एतच्छ्लोकस्य स्थाने—
   प्रकारं च समुद्धृत्य तकारं च दकारकम् ।
   तकारं च यकारं च नमोऽन्तं प्रतिकल्प्यताम् ॥
   इति पाठः फ पुस्तके दृश्यते ॥

एवं विद्याङ्गमाख्यातं[1] प्रकारं[2] च समुद्धरेत् ।
नकारं चैव वाकारं[3] तकारेण मकारयुक्[4] ॥ २५ ॥

[5] नमोऽन्तं तु समुद्धृत्य स्वाहान्तं शिरसा[6] विदुः[7] ।
शिकारं[8] चैव वाकारं फट् च हुङ्कारमेव च[9] ॥ २६ ॥

वषट्कारसमायुक्तं शिखाबीजमुदाहृतम् ।
शिकारं चैव वाकारं तकारेण[10] मकारयुक् ॥ २७ ॥

---

1. एवं विद्या समाख्यातम्–फ.
2. प्रकारं–ग. च. ज. झ. पकारं–फ.
3. नकारं च यवाकारं–फ.
   नकारं चैव माकारं–ज.
4. यकारं च नमोऽन्तकम्–ग. च. झ.
   तकारेण मकारकः–फ.
5. इतः पूर्वं–ग. च. ज. झ. पुस्तकेषु—
   "एवं विद्याङ्गमाख्यातं तकारेण मकारयुक् ।"
   इत्यर्धं अधिकं दृश्यते । नमोन्तेन–फ.
6. शिरसो–झ. त.
   शिरसे–फ.
7. भवेत्–त.
8. वकारं–त.
9. फट्कारं हुङ्कारमेव च–क. घ. छ. ज. ट. ठ. ड. ढ. त. थ. द.
   वषड्ढुंकारमेव च–ख.
   षट् च हुंकारमेव च–झ.
   फट्कारं हुं तथैव च–फ.
10. रकारेण–प.

[1] तकारं च मकारं च हकारं च [2] समुद्धरेत् ।
तकारं [3] च जकारं [4] च अनुस्वारं च सर्वतः ॥ २८ ॥
जकारे [5] तु समायुक्तं मकारं च पकारकम् [6] ।
तकारं च [7] शिकारं च मकारं च समुद्धरेत् [8] ॥ २९ ॥
आकारं [9] च वकारं च [10] नकारं च यकारयुक् [11] ।

1. इतः पूर्वं–छ. पुस्तके—
   "देकारं च जकारं च नकारं च मकारयुक् ।"
   इत्यधिकः पाठः दृश्यते ।
2. हकारेण–प.
3. तेकारं–घ. छ. त. थ. फ.
4. मकारं–छ. ज. ग. च.
   दकारं–थ.
   रकारं–फ.
5. झकारे–ग. च.
   तुकारे–झ.
6. फकारकं–ख. ग. च. ट. ठ. ढ. त. थ. द.
   जं च मं च पकारं च रेयं चाथ शिकारकम्–फ.
7. रकारं च–ख. घ. छ. ट. ठ. ढ. त. थ. द.
   नकारं च–ग. च.
8. पद्यार्धमिदं फ. पुस्तके न दृश्यते ।
9. अकारं–ख. ग. घ. छ. ढ. त. थ.
10. यकारं च–ग. च.
11. तकारं च मकारयुक्–ग. च.
    रकारं च मकारयुक्–प.
    नकारेण तकारकः–फ.
    अकारं च यकारं च
        रकारं च मकारयुक्–ज. झ.
        ,, मकारयुत्–क.
        ,, मकारकम्–थ.

वह्निशिखार[1]संयुक्तं यकारं तु[2] मकारयुक् ॥ ३० ॥
यहकारं प्रकारं च[3] अनुस्वारसमायुतम्[4] ।
[5]कक्कारं[6] च मक्कारं च पकारं[7] च शिकारकम्[8] ॥ ३१ ॥

---

1. शेखर–झ. च.
2. यकारं च–फ.
   ऐकारं च–झ.
3. यौकारं च ककारं च–घ. ट. ठ. ढ. थ. द.
   यकारं च ककारं च–प.
   योकारं च ककारं च–छ. त.
   ऐकारं च सकारं च–ग.
   ऐकारं च ककारं च-च.
   यहकारं ऋकारं च–त.
4. यौकारं च सकारं च रकारं च मकारयुक्–झ.
   योगं च मनुतः स्वारः कश्च पश्च वकारकः–फ.
5. 'ककारं च मकारं च' इत्यारभ्य 'एवं विद्याङ्गमाख्यातम् शक्त्यङ्गानि ततः शृणु'—इत्यन्तभागस्थाने–फ. पुस्तके अयं पाठो वर्तते—यथा—
   " शिश्च न्यस्वारसंयुक्तेर्गश्च लश्च शुकारकः ।
   मश्च अश्थाथ वाकारो हिश्च पिश्च शिकारकः ॥
   लश्च मश्च तथा भश्च क्षश्च क्षप्रश्च कारकः ।
   पश्च नश्च कताबन्ययश्च पूर्णयसंयुतम् ।
   कहकहकिरिसमायुक्तं सूक्ष्मसूक्ष्मसमायुतम् ।
   ऊ च दृश्च निकारश्च – – मश्च उकारकः ।
   प्रश्च विश्च न्यकारश्च व च थैव इकारकः ।
   फट्कारस्तम्भयेत्येव स्तम्भशब्दस्तथा पुनः ।
   यश्च उंकारफट्कारो व च म सर्वरक्षणः ।
   प्रश्च स्पृश्च तथारश्च स्फुश्च रश्चाथ सो र च ।
   सोरश्च तरतश्चरपि तत श्च श्चापि सूप च ।

अनुस्वारसमायुक्तं ग्रकारं च [1] लकारकम् [2] ।
रुकारं [3] च भकारं च [4] मकारेण समुच्चयम् ॥ ३२ ॥

---

चश्च दश्च च कं चैव पचंटप्रचटः पुनः ।
कहश्चापि कहश्चापि वमश्चापि पुनर्वमः ।
सातयश्च सातयश्चाथ हुं फट्कारसमायुतम् ।
स्वरं चैव समायुक्तं अस्त्रं व्याप्यानिवारकम् ॥
ओंकारश्चैव हुङ्कारं व्यकारं सविसर्गकम् ।
लेपनं चेति विख्यातं विद्याङ्गं . . . वस्थितम् ॥ ''

इति ॥

6. अकारं–झ.
मकारं–क. ग. घ. च. छ. झ. ट. ठ. ढ. त. थ. द. प.

7. फट्कारं–ग. च झ.
फकारं–ख.
सकारं–ढ. द.

8. सिकारकं–ख.

1. ऋकारं–ज.
गकारं–ख. झ.
लकारं–ग.
ग्राकारं–ढ. द.

2. पद्यार्धमिदं–प. पुस्तके न दृश्यते ।

3. मकारं च–ग. च. ज. झ.
ऋकारं च–छ.
रकारं च–थ.

4. हकारं च–च. ज. झ.

अकारं[1] चैव वाकारं हक रं च[2] एकारकम्[3] ।
शिकारं च लकारं च[4] मकारं हारमेव च[5] ॥ ३३ ॥

क्षकारं[6] च वकारं[7] च ककारं च विकारकम्[8] ।
नकारेण समायुक्तं[9] बन्धशब्दमुदाहृतम्[10] ॥ ३४ ॥

---

1. ककारं–थ.
2. धकारं च–छ.
3. मकारकं–ज. झ.
   यकारकं–छ. ठ. ढ. त. द.
   येकारकं–ट.
4. क्षकारं च–छ.
5. मकारं च हकारकं–झ.
   हकारं हारमेव च–प.
   धकारं हारमेव च–छ.
6. दकारं–थ.
7. जकारं–ग. ज. झ.
   उकारं–ख.
   वृकारं–ध. छ. ट. ठ. ढ. त. द.
8. अकारं च वकारकम्–ग.
   रकारं च विकारकम्–छ.
   तकारं च विकारकम्–ढ. द.
   ककारं च एकारकम्–ख.
   ककारं च वकारकम्–झ.
9. समायुक्तो–ख.
10. मुदाहृतः–ख.

पूर्णं चैव तु पूर्णं च कहत्कह[1]समायुतम्[2] ।
किरि[3]द्वन्द्व[4]समायुक्तं सूक्ष्मसूक्ष्मसमायुतम् ॥ ३५ ॥
ईकारं[5] च एकारं[6] च रिकारि हारमेव च[7] ।
चकारं[8] च मकारं च उकारं च प्रकारकम्[9] ॥ ३६ ॥

---

1. कहाकह–ज. झ.
   कहकह–ख. झ. थ.
   कह चैव–प.
2. पूर्वं चैव तु पूर्वं च कहाकहसमायुतम्–ग. च.
3. करि–ज. झ.
   गिरि–ग. च.
4. द्वन्द्वं–ढ. द.
5. रंकारं–प.
   रूकारं–थ.
6. दकारं–ख. झ.
   उकारं–घ. छ. ढ. द. प.
   टकारं–ट. थ.
   मकारं–ठ.
7. रिकारो हारमेव च–ख.
   विकारिहारमेव च–ट.
   शिकारेकारमेव च–च.
   रिकारिहारमेव च–थ.
   रकारं च दकारं च निकारे हारमेव च–ज. झ.
   रकारं च जकारं च शिकारेकारमेव च–च. त.
8. फकारं–ग. च.
   रिकारं–प.
   छकारं–झ.
9. इकारं च पकारकम्–ग. च.
   टकारं च ,, –प. फ.
   ऱ्कारं च ,, –ट. ठ.

पिकारं[1] च श्यकारं च[2] स प चैव मकारकम्[3] ।
फट्कारं स्तम्भयश्चेति स्तम्भशब्दं तथैव च[4] ॥ ३७॥

यकारं[5] चैव हुङ्कारं[6] फट्कारेण[7] समायुतम् ।
एवं कवचमाख्यातं सर्वरक्षाकरं भवेत ॥ ३८ ॥

---

1. विकारं–ख. झ.
   पिकारं–क. घ. छ. ट. ठ. ढ. त. द. प.
2. शकारं–ख.
   स्यकारं–थ.
   शकारं च शफट् चैव–ग. च.
3. शकां चैव मकारकम्-छ.
   स ष चैव टुकारकम्–ग. च.
   स ष चैव डुकारकम्–ख. घ. ट. ठ. ढ. त. द.
   स ष चैव युकारकम्–झ.
   स ष चैव म्युकारकम्–प.
4. फट्कारः स्तम्भकश्चैव स्तम्भशब्दस्तथैव च–ग. च. ख. च. त.
   ,, छं–झ.
   फट्कारस्तभयश्चैव–प.
   ,, श्चेति–ट. त. थ.
   ,, यं चेति–छ.
   फट्कारं स्तम्भयश्चैव-ढ. द.
5. यंकारं–ग. च.
6. हंकारं–क.
   ऊ(हुं)कारं–ग.
   हूंकारं–घ. थ.
   ऊकारं–झ.
7. षट्कारेण–क. ट. थ.

[विद्याङ्गभूतानामस्त्राणां निरूपणम्]

[तत्र षोढा अस्त्रविभागः]

[1] शिवास्त्रं पशुपत्यस्त्रं [2] ब्रह्मास्त्रं क्षुरिकास्त्रकम् ।
व्योमास्त्रमित्यघोरास्त्रं एतद्विद्याङ्गमीरितम् ॥ ३९ ॥

[शिवास्त्रम्]

शिवास्त्रमन्त्रोद्धारं च प्रवक्ष्ये शृणु षण्मुख! ।
ओङ्कारं[रः] [3] प्रथमं बीजं शिकारं च[श्च] द्वितीयकम् ॥४०॥
तृतीयबीजं वाकारं[रः] स्त्राकारं च[श्च] चतुर्थकम् ।
पञ्चमं तु यकारं[रः] स्यात् षष्ठं फट्कारमेव[एव] च ॥ ४१ ॥

---

इदानीं विद्याङ्गभूतास्त्राणि निरूप्यन्ते— शिवास्त्रं पाशुपतास्त्रं ब्रह्मास्त्रं क्षुरिकास्त्रं व्योमास्त्रं अघोरास्त्रं इति विद्याङ्गं अस्त्रं षड्विधं भवति ॥ ३९ ॥

हे षण्मुख! इदानीं शिवास्त्रमन्त्रोद्धारः निरूप्यते—अवधारय । शिवास्त्रमन्त्रस्य ओङ्कारः प्रथमबीजम् । शिकारः द्वितीयबीजम् ॥४०॥

वाकारः तृतीयबीजम् । स्त्राकारः चतुर्थबीजम् । यकारः पञ्चमबीजम् । फट्कारः षष्ठबीजम् । [4] एवं च—"ओं शिवास्त्राय फट्" इति शिवास्त्रं भवति ॥ ४१ ॥

---

1. 'शिवास्त्रं' इत्यारभ्य "अघोरास्त्रमथ शृणु" इत्यन्तो भागः–क. ख. ज. पुस्तकेषु न दृश्यते ।
2. 'पाशुपतास्त्रं'–झ. ध.
3. हौंङ्कारं–ध.
4. अत्र—सन् 1893 तमवत्सरे श्री॥ आगमिकनञ्जुण्डदीक्षितैः मुद्रापिते शैवागमसारे—
   "ओं हः शिवास्त्राय फट्' इति शिवास्त्रमन्त्रं लिखित्वा, तत्र टिप्पण्यां "ओं हौं अनन्तशक्तिधाम्ने ज्योतिरूपाय शिवास्त्राय फट्' इति पाठान्तरं प्रदर्शितम् ॥

शिवास्त्रमन्त्रः षड्वर्णः[1] सर्वसिद्धिप्रदायकः ।
शिवास्त्रमन्त्रः सम्प्रोक्तः शृणु पाशुपतं मनुम्[2] ॥ ४२ ॥

[पाशुपतास्त्रम्]

ओङ्कारं[रः] प्रथमं बीजं श्लीङ्कारं च[रश्च][3] द्वितीयकम् ।
पकारं[रः] स्यात् तृतीयं तु शुकारं च[रश्च][4] चतुर्थकम् ॥४३॥
हुङ्कारं[रः] पञ्चमं बीजं फट्कारं[रः] षष्ठबीजकम् ।
एष पाशुपतास्त्राख्यः मन्त्रः षड्वर्णको भवेत् ॥ ४४ ॥

---

अयं च षड्वर्णः सर्वसिद्धिप्रदायकः शिवास्त्रमन्त्रः । एवं शिवास्त्रमन्त्रो निरूपितः । इदानीं पाशुपतास्त्रमन्त्रं शृणु ॥ ४२ ॥

इदानीं पाशुपतास्त्रमन्त्रोद्धारः निरूप्यते — पाशुपतास्त्रमन्त्रस्य ओङ्कारः प्रथमबीजम् । श्लीङ्कारः द्वितीयबीजम् । पकारः तृतीयबीजम् । शुकारः चतुर्थबीजम् ॥ ४३ ॥

[5] हुङ्कारः पञ्चमबीजम् । फट्कारः षष्ठबीजम् । एवं च "ओं श्लीं पशु हुं फट्" इति भवति । एवं पाशुपतास्त्रमन्त्रः षड्वर्णो भवति ॥ ४४ ॥

---

1. षट्प्रोक्तः–ध.
2. मम–ध.
3. श्लङ्कारं–ध.
4. मकारं च–ध.
5. अत्र—सन् 1893 तमवत्सरे श्री॥ आगमिकनन्जुण्डदीक्षितैः मुद्रापिते शैवागमसारे—"ओं श्लिं पशुं हुं फट्" इति पाशुपतास्त्रमन्त्रं लिखित्वा—तत्र टिप्पण्यां ओं श्लीं पशु हुं फट्" इति पाठान्तरं प्रदर्शितम् ॥

[ब्रह्मास्त्रम्]

प्रोक्तं पाशुपतास्त्रं हि[1] ब्रह्मास्त्रं च ततः शृणु ।
ओङ्कारं[रः] प्रथमं बीजं ब्रकारस्तु[2] द्वितीयकम् ॥ ४५ ॥

ह्माकारं[रः][3] स्यात् तृतीयं तु स्त्राकारस्तु[4] चतुर्थकम् ।
यकारं[रः] पञ्चमं बीजं षष्ठं फट्कारकं[को] भवेत् ॥ ४६ ॥

अयं ब्रह्मास्त्रमन्त्रश्च षड्वर्णः शुभदो भवेत् ।
ब्रह्मास्त्रमन्त्रः सम्प्रोक्तः क्षुरिकास्त्रमथ शृणु ॥ ४७ ॥

---

हे षण्मुख! पाशुपतास्त्रमन्त्रः निरूपितः। इदानीं ब्रह्मास्त्रमन्त्रोद्धारः निरूप्यते। ब्रह्मास्त्रमन्त्रस्य ओङ्कारः प्रथमबीजम्। ब्रकारः द्वितीयबीजम् ॥ ४५ ॥

ह्माकारः तृतीयबीजम्। स्त्राकारः चतुर्थबीजम्। यकारः पञ्चमबीजम्। फट्कारः षष्ठबीजम्। एवं ओं ब्रह्मास्त्राय फट् ब्रह्मास्त्रमन्त्रः भवति ॥ ४६ ॥

अयं च मन्त्रः षड्वर्णः शुभप्रदश्च। एवं ब्रह्मास्त्रमन्त्रोद्धारः निरूपितः। इदानीं क्षुरिकास्त्रमन्त्रोद्धारः निरूप्यते ॥ ४७ ॥

---

1. प्रोक्तः पाशुपताख्यः–ध.
2. ब्रकारं तु–ग. झ. ध.
3. हकारं–ध.
4. स्त्राकारं तु–क. ख. ग. घ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. प.

[क्षुरिकास्त्रम्]

[1]शिकारं[रः][2] प्रथमं बीजं छिकारंतु[रस्तु] द्वितीयकम् ।
क्षुकारः स्यात् तृतीयं च रिकारं च[रश्च] चतुर्थकम् ॥ ४८ ॥
काकारं[रः] पञ्चमं बीजं स्त्राकारं[रः] षष्ठवर्णकम् ।
यकारं[रः] सप्तमं बीजं फट्कारंचा[रश्चा]ष्टमं भवेत् ॥ ४९ ॥

---

क्षुरिकास्त्रमन्त्रस्य **शिकारः** प्रथमबीजम् । **छिकारः** द्वितीयबीजम् । **क्षुकारः** तृतीयबीजम् । **रिकारः** चतुर्थबीजम् ॥ ४८ ॥

**काकारः** पञ्चमं बीजम् । **स्त्राकारः** षष्ठबीजम् । **यकारः** सप्तमबीजम् । **फट्कारः** अष्टमबीजम् । एवं च[3] 'शि छि क्षुरिकास्त्राय फट्' इति क्षुरिकास्त्रमन्त्रः ॥ ४९ ॥

---

1. "शिकारं प्रथमं बीजं" इत्यारभ्य—"अघोरास्त्रमथ शृणु" इत्यन्तो भागः–ध. पुस्तके न दृश्यते ।
2. छिकारं–ग. च. झ.
   सन् 1961 तमवत्सरे N. R. कृष्णभट्टसम्पादितपाण्डिचेरिमुद्रितरौरवागमक्रियापादप्रथमपटलटिप्पण्यां (P. 19) वातुलोद्धृतपाठः दृश्यते ।
3. अत्र—सन् 1961 तमे वत्सरे N. R. कृष्णभट्टसम्पादितपाण्डिचेरिमुद्रिते रौरवागमक्रियापादप्रथमपटलटिप्पण्याम्—(P. 20)
   "ओं शिं छिं क्षुरिकास्त्राय फट्"
   इति वर्तते ।
   सन् 1893 तमवत्सरे श्री॥ आगमिकनञ्जुण्डदीक्षितसङ्ग्रथितमुद्रिते शैवागमसारे—
   "ओं चि छि क्षुरिकास्त्राय फट्"
   इति क्षुरिकास्त्रमन्त्रं लिखित्वा, तत्रैव टिप्पण्यां—
   "ओं चि छि क्षुरिकास्त्राय हुं फट्"
   इति पाठान्तरं प्रदर्शितम् ।

क्षुरिकास्त्रमनुश्चाष्ट वर्णोऽयं स्याद्रसप्रदः ।
क्षुरिकास्त्रमनुः प्रोक्तः व्योमास्त्रं च ततः शृणु ॥ ५० ॥

[व्योमास्त्रम्]

ओङ्कारं[रः] प्रथमं बीजं माङ्कारं च[रश्च] द्वितीयकम् ।
तृतीयबीजं मीङ्कारं[रः] सर्वकारणकारणम् ॥ ५१ ॥
चतुर्थबीजं मूङ्कारं[रः] व्योकारं[रः] पञ्चमं भवेत् ।
षष्ठवर्णं मकारंच[रश्च] व्याकारं[रः] सप्तमं भवेत् ॥ ५२ ॥
पिकारम[श्चा]ष्टमं बीजं नेकारं[रो] नवमं स्मृ[तः]तम् ।
ओङ्कारं[रो] दशमं बीजं व्योमास्त्रं तु दशार्णकम् ॥ ५३ ॥

---

अयं मन्त्रस्तु **अष्टवर्णः** रसप्रदश्च भवति । एवं **क्षुरिकास्त्र-मन्त्रोद्धारः** निरूपितः । इदानीं **व्योमास्त्रमन्त्रोद्धारः** निरूप्यते ॥ ५० ॥

व्योमास्त्रमन्त्रस्य **ओङ्कारः** प्रथमं बीजम् । **माङ्कारः द्वितीय-बीजम् । मीङ्कारः सर्वकारणकारणं** तृतीयबीजम् ॥ ५१ ॥

**मूङ्कारः** चतुर्थबीजम् । **व्योकारः** पञ्चमबीजम् । **मकारः** षष्ठ-बीजम् । **व्याकारः** सप्तमबीजम् ॥ ५२ ॥

**पिकारः** अष्टमबीजम्, **नेकारः** नवमबीजम्, **ओङ्कारः** दशम-बीजम् । एवं च [1]"ओं मां मीं मूं व्योमव्यापिने ओं" इति **व्योमास्त्रमन्त्रः दशार्णो** भवति ॥ ५३ ॥

---

1. अत्र 'ओं आं ईं ऊं व्योमव्यापिने ओं' इति पाठः प्रयोगे वर्तते इति ज्ञायते ।
   अत्र—सन् 1893 तमवत्सरे श्री॥ आगमिकनञ्जुण्डदीक्षितसङ्ग्रथिते मुद्रितशैवागमसारे—
   "ओं आं ईं ऊं व्योमास्त्राय फट्"
   इति व्योमास्त्रमन्त्रं लिखित्वा, अत्र टिप्पण्यां 'ओं आं ईं ऊं व्योम-व्यापिने व्योमास्त्राय फट्' इति पाठान्तरं लिखितम् ।

व्योमास्त्रमन्त्रः सम्प्रोक्तश्चाघोरास्त्रमथ शृणु ।

[अघोरास्त्रम्]

[1] प्रकारं च स्फुकारं च रकारं च स्फुकारकम् ॥ ५४ ॥
रकारं चैव विन्यस्य घोरं चैव तु घोरकम्[2] ।
तकारं चैव विन्यस्य रकारं चैव विन्यस्येत्[3] ॥ ५५ ॥

---

एवं व्योमास्त्रमन्त्रोद्धारः निरूपितः । अनन्तरं अघोरास्त्रमन्त्रोद्धारं शृणु । अघोरास्त्रमन्त्रस्य आदितः क्रमेण प्र स्फु र स्फु— ॥ ५४ ॥

—र घोर घोरतर इत्युद्धृत्य— ॥ ५५ ॥

---

1. अत्र–ग. पुस्तके—
   "प्रकारं च स्फुकारं च रकारं प्रस्फुकारकम् ।
   रकारं चैव विन्यस्य घोरं चैव तु घोरकम् ।
   तकारं च नुकारं च रूकारं च पकारकम् ।
   चटश्चैव चटश्चैव गचटः प्रचटस्तथा ।
   कहश्चैव कहश्चैव वमश्चैव वमस्तथा ।
   पूतयश्चैव हुं फट् च (फट्कारश्च)
   स्वाहाकारसमायुतम्—इति दृश्यते ।
   –च. पुस्तके तु—
   प्रकारं च स्फुकारं च रकारं च स्फुकारकम् ।
   प्रकारं चैव विन्यस्य घोरं चैव तु घोरकम् ।
   तकारं चैव विन्यस्य मकारं चैव विन्यसेत् ।
   तकारं च नुकारं च रुकारं च पकारकम् ।
   पूतश्चैव च हुं फट् च स्वहाकारसमायुतम् ।
   स्वरेणैव तु संयुक्तं मन्त्रभेदमुदाहृतम् ॥
   इति दृश्यते ।
2. स्फुकारं च रकारं च घोरं चैव तु घोरकम्–ध.
3. अतः परं तकारं च रकारं च तकारकम्–क. ख. घ. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. फ.
   अतः परं तकारं च मकारं च तकारकम्–ग. च.

तकारं च नुकारं च[1] रूकारं च पकारकम् ।
चटश्चैव चटश्चैव प्रचटः[2] प्रचटस्तथा ॥ ५६ ॥

कहश्चैव कहश्चैव वमश्चैव वमस्तथा ।
घातय घातय ब्रूयात् ततो हुं फट् समायुतम् ॥ ५७ ॥

स्वाहा चैव समायुक्तं[3] मन्त्रो[4] हेतिरुदाहृतः[5] ।

[षड्बीजयुतपञ्चमशक्त्यङ्गनिरूपणम्]

एवं विद्याङ्गमाख्यातं शक्त्यङ्गानि ततः शृणु ॥ ५८ ॥

---

ततः त नु रू प च ट च ट प्रचट प्रचट इत्युद्धृत्य— ॥ ५६ ॥

ततः "कह कह वम वम घातय घातय हुं फट्" इति उद्धृत्य— ॥ ५७ ॥

ततः स्वाहा इति संयोजयेत् । एवं चेत्—आहत्य

---

1. मकारं च-च.
2. प्रचतः-ग.
3. स्वाहाश्चैव समायुक्तम्-ग.
   स्वरेणैव सुसंयुक्तः-ख. (पा).
   स्वरेणैव तु संयुक्तम्-ध.
4. मन्त्र-ग. च.
5. हेतिरुदाहृतम्-ग. च. प.
   एतदुदाहृतम्-ध.

आधार[1]शक्तिबीजं च बिन्दुनादसमन्वितम् ।
[2]प्रथमं शक्तिबीजं स्यात् सामिती बीजमित्यपि ॥ ५९ ॥

---

"[3]प्रस्फुर, स्फुर, घोर, घोरतर, तनुरूप, चट चट प्रचट प्रचट कह कह वम वम घातय घातय हुं फट् स्वाहा "—इति अघोरास्त्रमन्त्रो भवति । उक्तरीत्या विद्याङ्गं निरूपितम् । इदानीं शक्त्यङ्गानि निरूप्यन्ते ॥ ५८ ॥

आधारशक्तिबीजं आधाराभिधानसकारः शक्त्यभिधानाऽऽकारेण बिन्दुना च युक्तः भवति । इदं च प्रथमशक्तिबीजं सां इति ई बीजमित्यपि भवति ॥ ५९ ॥

---

1. आधारं–क. घ. ट. ठ. ढ. त. थ. द. ध.
2. पद्यार्धमिदं–क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न दृश्यते ।
3. अत्र च पाठभेदः—

"मया स्फुरद्वयं भूयः प्रस्फुरद्वितयं ततः ।
घोरघोरतरेत्यन्ते तनुरूपपदं पुनः ॥
चटयुग्मं तदन्ते स्यात् प्रचटद्वितयं ततः ।
कहयुग्मं वमद्वन्द्वं ततो बन्धयुगं पुनः ॥
घातयद्वितयं वर्म फडन्तं समुदाहृतः ।
एकपञ्चाशदर्णोऽयमघोरास्त्रमहामनुः ॥

इति शारदातिलके विंशे पटले " इति—ख. पुस्तकभूमिकायाम् ॥
अत्र सन् 1893 तमवत्सरे श्री॥ आगमिकनञ्जुण्डदीक्षितसंग्रथितमुद्रित शैवागमसारे—"ओं ह्रीं प्रस्फुर घोर घोरतर तनुरूप चट चट प्रचट कह कह वम वम घातय घातय हुं फट् ।" "चतुष्षष्टि-वर्णात्मिकाविद्या " इति अघोरास्त्रमन्त्रं लिखित्वा अत्र टिप्पण्यां—"ओं ह्रीं ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोरतर तनुरूप चट चट प्रचट प्रचट कह कह वम वम बन्धय बन्धय घातय पातय पातय अघोरास्त्राय हुं फट्" इति पाठान्तरं लिखितम् ॥

प्रथमं बीजमित्युक्तं द्वितीयं बीजमुच्यते [1] ।
[2] पीताभयुक् शक्तिबीजं बिन्दुनादसमायुतम् ॥ ६० ॥
[3] द्वितीयं बीजमित्युक्तं तृतीयं बीजमुच्यते ।
[4] ऊकारयुक् शक्तिबीजं [5] बिन्दुनादसमन्वितम् ॥ ६१ ॥

---

प्रथमशक्तिबीजमुक्तम् । इदानीं द्वितीयशक्तिबीजमुच्यते । पीताभं ईकारबीजं शक्तिबीजं सकारः बिन्दुनादं अनुस्वारः, एते सम्भूय सीं इति भवति ॥ ६० ॥

एवं द्वितीयशक्तिबीजमुक्तं भवति । इदानीं तृतीयशक्तिबीजमुच्यते । ऊकारेण अनुस्वारेण च सहितं स इति शक्तिबीजं सूं इति भवति ॥ ६१ ॥

---

1. प्रथमं बीजमित्युक्तं पीताभं शक्तिबीजकम्—ख.
प्रथमं चैवमित्युक्तं पीताभं शक्तिबीजकम्—ठ. ढ. द. ध. प.
प्रथमं चैवमित्युक्तं रक्ताभं शक्तिबीजकम्—क. घ. छ. ट.
प्रथमं चैवमित्युक्तं आधारं शक्तिसंयुतम्—थ.
2. अस्यार्धस्य स्थाने—ध. पुस्तके—
"शक्तिं चतुर्दशोपेतं बिन्दुनादसमन्वितम् ।
द्वितीयमिति निर्दिष्टं तृतीयमधुनोच्यते ॥
शिवाद्यं षष्ठमोपेतं बिन्दुनादसमन्वितम् ।
तृतीयबीजमित्युक्तं ऐकारं शक्तिसंयुतम् ।
कार्यकारणसंयुक्तं चतुर्थं बीजमुच्यते ॥
इति दृश्यते ।
बिन्दुनादसमायुक्तं द्वितीयं बीजमुच्यते—क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
प्रथमं शक्तिबीजं स्यात् पीताभं शक्तिबीजकम् ॥
3. पद्यार्धमिदं—क. ख. घ. छ. ट. ठ. ढ. त. द. ध. प. पुस्तकेषु न दृश्यते ।
4. पद्यार्धमिदं ज. पुस्तके न दृश्यते ।
5. ऊकारं शक्तिबीजं च—ख. घ. छ. ट. थ.
उकारं शक्तिबीजं च—क. ठ. ढ. त. थ. द. ध.
पकारं शक्तिबीजं च—प.

तृतीयं बीजमित्युक्तं[1] चतुर्थं बीजमुच्यते[2] ।
[3] शक्त्यर्णं वाग्भवोपेतं कार्यकारणसंयुतम्[4] ॥ ६२ ॥

[5] चतुर्थं बीजमित्युक्तं पञ्चमं बीजमुच्यते ।
शक्तिश्चतुर्दशोपेता[6] शिवशक्तिसमायुता[7] ॥ ६३ ॥

पञ्चमं[8] बीजमित्युक्तं[9] षष्ठं बीजमथोच्यते[10] ।

---

एवं तृतीयशक्तिबीजमुक्तं भवति । इदानीं **चतुर्थशक्तिबीजमुच्यते** । ऐकारेण बिन्दुना च सहितं स इति बीजं सैं इति भवति ॥ ६२ ॥

एवं चतुर्थं शक्तिबीजमुक्तं भवति । इदानीं **पञ्चमशक्तिबीजमुच्यते**—औकारेण बिन्दुना च सहितं स इति बीजं सौं इति भवति ॥ ६३ ॥

एवं पञ्चमशक्तिबीजमुक्तम् भवति । इदानीं **षष्ठशक्तिबीजमुच्यते**—

---

1. तृतीयं शक्तिबीजं स्यात्–ज.
2. ऐकारं शक्तिसंयुतम्–ग. च.
3. पद्यार्धमिदं–ध. पुस्तके न दृश्यते ।
4. एकारं शक्तिसंयुक्तं कार्यकारणसंयुतम्–प.
   कार्यकारणसंयुक्तं चतुर्थं बीजमुच्यते–क. घ. छ. ट. ठ. ढ. त. थ. द.
5. पद्यार्धमिदं–क. घ. छ. ज. ट. ठ. ढ. त. थ. द. पुस्तकेषु न दृश्यते ।
6. पेतं–क. ग. घ. च. छ. ज. झ. ट. ठ. ढ. त. थ. द. ध. प.
7. समायुतम्–क. ग. घ. च. छ. ज. झ. ट. ठ. ढ. त. थ. द. ध. प.
8. पञ्च–छ. त.
9. शक्तिरित्युक्तं–प.
   बीजमाख्यातं-क. ख. घ. ट. ठ. ढ. थ. द. ध.
   बीजसमाख्यातं–छ. त.
10. स्वरान्तं शक्तिसंयुतम्–क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ध.
    षष्ठमं बीजमुच्यते–प.

स्वरान्तं शक्तिसंयुक्तं वर्णं चैव तु[वर्णेनैव तु]संयुतम्[4] ॥ ६४ ॥

[षष्ठसामान्याङ्गनिरूपणम्]

एवं[1] शक्त्यङ्गमाख्यातं सामान्याङ्गमथोच्यते ।
[2]आदिवर्गेऽश्विनौ वेदाः रसो भानुर्मनुस्तथा[3] ॥ ६५ ॥

---

अकारेण विसर्गेण च सहितं स इति शक्तिबीजं सः इति षष्ठं शक्तिबीजं भवति । रेफवर्जितानि—सां सीं-सूं-सैं-सौं-सः इति षट् तान्त्रिकशक्ति-बीजानि । एतान्येव रेफसहितानि वैदिकानि भवन्ति ॥ ६४ ॥

एतावत्पर्यन्तं शक्त्यङ्गमुक्तम् । इतः परं सामान्याङ्गं निरूप्यते—**आदिवर्गे** प्रथमवर्गभूतषोडशकलास्वरवर्गे **अश्विनौ** द्वितीयाक्षरम्, **वेदः** चतुर्थाक्षरम्, **रसः** षष्ठाक्षरम्, **भानुः** द्वादशाक्षरम्, **मनुः** चतुर्दशा-क्षरम्, — ॥ ६५ ॥

---

4. वर्णं चैव तु संयुक्तं षष्ठकं बीजमुच्यते–ख.
   वर्णं चैव तु संयुक्तं षष्ठमं बीजमुच्यते–घ. छ. ट. ठ. ढ. त. थ. द. ध.

1. एते–क. घ. छ. ट. ठ. ढ. थ. द.

2. एतदर्धस्थाने–झ. पुस्तके—
   आदिवर्गे द्वितीयार्णं चतुरर्णमनन्तरम् ।
   षष्ठवर्णं द्वादशार्णं तच्चतुर्दशवर्णकम् ।
   षोडशार्णं षडेते च सामान्याङ्गमितीर्यते ।
   इति दृश्यते ।

3. वेदरसौ भानुमनू तथा–ग. च.

षोडशार्णं षडेते च[1] सामान्याङ्गमितीर्यते[2] ।
ब्रह्मविष्णु[3]सुरेन्द्राश्च[4] आदित्येन्दुगुहास्तथा ॥ ६६ ॥

मदनक्षेत्र[5]विघ्नेशाश्चाष्ट[6]मूर्तिर्वसु[7]स्तथा ।
विद्येशाश्च गणेशाश्च लोकपालायुधानि च[8] ॥ ६७ ॥

---

षोडशार्णं विसर्गः, एते इमे षड्वर्णाः मिलित्वा सामान्याङ्गमित्युच्यते । इदं च समस्तदेवतासाधारणमङ्गम् । सर्वदेवतायोग्यमित्यर्थः । ब्रह्मा, विष्णुः, देवेन्द्रः, आदित्यः, चन्द्रः, षण्मुखः;— ॥ ६६ ॥

— मन्मथः, क्षेत्रपालः, विघ्नेशः, भवादयोऽष्टौ मूर्तयः, धरादयोऽष्टौ वसवः, श्रीकण्ठाद्यष्टौ विद्येशाः, उमादिगणेश्वराः इन्द्रादयो लोकपालाः, वज्राद्यायुधानि— ॥ ६७ ॥

---

1. षोडशश्चेति षड्वर्णाः–ट. थ.
   षोडशं चैव षड्वर्णाः–ढ. त. द. ध.
   षोडशं चेति षड्वर्णं–क. ख. घ. ज. ट.
2. मथोच्यते–ध.
   मितीरितम्–थ.
3. ब्रह्मविष्णू–प.
4. सुरेन्द्रश्च–क. घ. प.
5. मदनो क्षेत्र–क. घ. छ. ज. ट. ठ. ढ. त. थ. द.
6. विघ्नाश्च चाष्ट–थ.
   विघ्नाश्च चाष्ट–क. घ. छ. ज. ट. ठ. ढ. त. द.
7. मूर्तिवसु–घ. छ. ट. ठ. ढ. द.
8. लोकपालायुधास्तथा–ग. च.
   लोकपालायुधस्तथा–क. घ. ट. ठ. थ. प.

सिद्धविद्याधराश्चैव गन्धर्वाप्सरसस्तथा[1] ।
यक्षकिन्नरभूताश्च ऋषयः खेचरास्तथा ॥ ६८ ॥

[2]अन्येषां सर्वदेवानां स्वनामाद्यक्षरं तथा ।
[3]सामान्येषु[4] समायोगात्[5] बिन्दुनादसमन्वितम् ॥ ६९ ॥

तेषामङ्गानि चोक्तानि मूलं तद्बीजमुच्यते[6] ।

[प्रथमशिवाङ्गवर्णनिरूपणम्]

सामान्याङ्गमिदं प्रोक्तं तेषां वर्णस्तथोच्यते ॥ ७० ॥

---

—सिद्धाः, विद्याधराः, गन्धर्वाः, अप्सरसः, यक्षाः, किन्नराः, भूताः, ऋषयः, आकाशगमनशीलाः देवाः ;— ॥ ६८ ॥

—इत्येवं ये ये वर्तन्ते तेषां ब्रह्मादिव्यतिरिक्तसर्वदेवानां च नामाद्यक्षरं अनुस्वारसहितं सत् पूर्वोक्तेषु आकारादिषु सम्बन्धात् तत्तद्देवताबीजं भवति ॥ ६९ ॥

तेषां नामाद्यक्षरबीजानां आकाराद्यङ्गान्यभिहितानि । तेषां मूलं तु तत्तद्देवतानां वर्णपटले बीजत्वेन यदुक्तं तदेव तेषां मूलबीजम् ।

---

1. गन्धर्वाश्चाप्सरास्तथा–ख.
2. पद्यार्धमिदं–प. पुस्तके न दृश्यते ।
3. पद्यार्धमिदं–ज. पुस्तके न दृश्यते ।
4. समान्याङ्गेषु–ठ.
   सामान्ये तु–प.
5. संयोगात्–ठ.
6. तद्बीजं मूलमुच्यते–ज.

हृदयं शुक्लवर्णं स्यात् पीतवर्णं शिरस्तथा[1] ।
शिखां[2] रक्तसभां विद्यात्[3] कवचं स्फटिकप्रभम् ॥ ७१ ॥
नेत्रं श्यामनिभं विद्यात्[4] कृष्णाभं चास्त्रमुच्यते[5] ।

---

तदित्थम्—

ककारः ब्रह्मबीजं भवति। तदेव तस्य मूलम्। तेन सामान्याङ्गसंयोगात् कां कीं कूं कैं कौं कः इति ब्रह्म षडङ्गं भवति। इन्द्रबीजं जकारः। तस्यापि पूर्ववत् सामान्याङ्गसंयोगात् जां जीं जूं जैं जौं जः इति इन्द्रषडङ्गं भवति। एवं अन्येषामपि ज्ञेयम्। चन्द्रबीजं ठकारः। मदनबीजं मकारः। विघ्नेश्वरबीजं गकारः। तत्तद्देवतामन्त्रजपकाले तत्तद्देवताङ्गमूलबीजाभ्यां सह न्यासं कुर्यात्। देहन्यासं करन्यासं अङ्गन्यासं च कुर्यात्। एवं सामान्याङ्गं निरूपितम्।

इतः परं शिवाङ्गादिषडङ्गसम्बन्धिहृदयादिषट्त्रिंशदङ्गानां वर्णाः निरूप्यन्ते ॥ ७० ॥

तत्र प्रथमं शिवाङ्गवर्णः निरूप्यते—हृदयं श्वेतवर्णयुतं भवति। शिरः पीतवर्णयुतं भवति। शिखा रक्तवर्णा भवति। कवचं स्फटिकवर्णं भवति ॥ ७१ ॥

नेत्रं श्यामवर्णं भवति। अस्त्रं कृष्णवर्णं भवति। उक्तरीत्या

---

1. शिरसा पीतवर्णकम्–ध.
2. शिखादि–च.
3. विन्द्यात्–क. घ. ट. ठ. ढ. त. थ. द. ध.
4. विन्द्यात्–क. घ. ट. ठ. ढ. त. थ. द. ध.
5. अस्त्रं कृष्णाभमुच्यते-ध.

[द्वितीयभूताङ्गवर्णनिरूपणम्]

[1]एवं शिवाङ्गमाख्यातं भूताङ्गं च तथोच्यते[2] ॥ ७२ ॥

पीतं[3] शुक्लनिभं[4] रक्तं[5] कृष्णं धूम्रं[6] च पावकम् ।
भूताङ्गानां वर्णभेदाः[7] समासात् कीर्तिता इमे[8] ॥ ७३ ॥

[तृतीयकूटाङ्गवर्णनिरूपणम्]

श्वेतं रक्तं तथा[9] नीलं कुङ्कुमं पीतमञ्जनम् ।

---

शिवाङ्गवर्णः निरूपितः । इदानीं भूताङ्गवर्णः निरूप्यते— ॥ ७२ ॥

भूताङ्गस्य हृदयं पीतवर्णं भवति । शिरः शुक्लवर्णम् । शिखा अरुणवर्णा । कवचं कृष्णवर्णम् । नेत्रं धूम्रवर्णम् । अस्त्रं च पावकवर्णम् । इत्येवं भूताङ्गानां वर्णाः परिकीर्तिताः ॥ ७३ ॥

---

1. पद्यार्धमिदं–थ. पुस्तके न दृश्यते ।
2. भूताङ्गानि तथोच्यते–क. ग. च. ज.
3. शुक्लं–क.
4. शुक्लारुणं–ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
   पीतारुणं–क.
5. चैव–क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
6. ताम्रं–प.
7. भूताङ्गानां च वर्णानि–ग.
   भूताङ्गानां तु वर्णानि–क. ख. घ. छ. ज. झ. ट. ठ. ढ. त. थ. द. ध. प.
8. कीर्तितानि तु–क. ख. ग. घ. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. प.
9. रक्तनिभं–ख (पा).

कूटाङ्गानां तु[1] वर्णाश्च[2] समासात् परिकीर्तिताः[3] ॥ ७४ ॥

[विद्याङ्गवर्णनिरूपणम्]

जपा[4]कुसुमकुन्दाभं पावकं चेन्द्र[5]नीलकम् ।

सिन्दूरं[6] हरितालं च[7] विद्याङ्गानां[8]

[पञ्चमशक्त्यङ्गवर्णनिरूपणम्]

नभस्तथा[9] ॥ ७५ ॥

---

इदानीं कूटाङ्गानां वर्णाः निरूप्यन्ते—कूटाङ्गस्य हृदयं श्वेतवर्णं भवति । शिरः रक्तवर्णम् । शिखा नीलवर्णा । कवचं कुङ्कुमवर्णम् । नेत्रं पीतवर्णम् । अस्त्रं च अञ्जनवर्णम् । उक्तरीत्या कूटाङ्गानां वर्णाः निरूपिताः ॥ ७४ ॥

इदानीं विद्याङ्गानां वर्णाः निरूप्यन्ते—विद्याङ्गहृदयं जपाकुसुमवर्णं भवति । शिरः कुन्दकुसुमवर्णम् । शिखा पावकवर्णा । कवचं इन्द्रनील-वर्णम् । नेत्रं सिन्दूरवर्णम् । अस्त्रं च हरितालवर्णम् । एवं विद्याङ्गानां वर्णाः निरूपिताः । इदानीं शक्त्यङ्गानां वर्णाः निरूप्यन्ते—शक्त्यङ्गहृदयं आकाशवर्णम् ॥ ७५ ॥

---

1. च–ज.
2. वर्णानि–क. ख. ग. घ. छ. ज. झ. ट. ठ. ढ. त. थ. द. ध. प.
3. समासात् उदितानि तु–ख.
   समासात् परिकीर्तितम्–क. ग. घ. ज. झ. ट. ठ. ढ. त. थ. द.
4. जटा–क. घ.
5. चन्द्र–ध.
6. सिन्धूरं–क. घ. ठ. ढ.
7. हरिताभं–प.
8. विद्याङ्गानि–ख.
9. निभस्तथा–ग. च. ज. ध.
   अनुक्रमात्–ध.

पीतं श्यामं तथा रक्तं कृष्णं मरकतं तथा ।
एतैरेव सवर्णानि शक्त्यङ्गानां क्रमेण तु[1] ॥ ७६ ॥

[षष्ठसामान्याङ्गवर्णनिरूपणम्]

स्फटिकं[2] रक्तपीतं च[3] श्यामं स्यात्[4] काञ्चनारुणे[5] ।
एतान्युक्तानि वर्णानि[6] सामान्याङ्गमुदीरितम्[7] ॥ ७७ ॥

---

—शिरः पीतवर्णम् । शिखा श्यामवर्णा । कवचं रक्तवर्णम् । नेत्रं कृष्णवर्णम् । अस्त्रं च मरकतवर्णम् । एवं शक्त्यङ्गानां हृदयादीनां व्योमादिवर्णाः निरूपिताः ॥ ७६ ॥

इदानीं सामान्याङ्गानां वर्णाः निरूप्यन्ते—सामान्याङ्गहृदयं स्फटिक-वर्णम् । शिरः रक्तवर्णम् । शिखा पीतवर्णा । कवचं श्यामवर्णम् । नेत्रं काञ्चनवर्णम् । अस्त्रं च अरुणवर्णम् । एवं सामान्याङ्गहृदयादीनां वर्णाः निरूपिताः । इत्थं सामान्याङ्गं निरूपितम् ॥ ७७ ॥

---

1. क्रमाणि तु—ग. च. ज.
   प्रकीर्तिताः—झ.
2. स्फाटिकं—ख. ग. च. झ.
3. रक्तं-पीतं च—क. घ. छ. ट. ठ. ड. ढ. त. थ. द. ध. प. फ. ब. भ.
4. श्यामाङ्गं—ख. ग. च. ज. झ.
5. काञ्चनारुणम्—क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. प.
6. एतानि वर्णान्युक्तानि—ट. थ.
7. ङ्गं प्रकीर्तितम्—क. ख. घ. ट. ठ. ढ. त. थ. द. ध. प.
   ङ्गं प्रकीर्तिताः—छ.

[तत्र ध्यानार्हं स्वरूपम्]

[स्वरूपविभागश्च]

[1]चतुर्भुजं[2] त्रिणेत्रं च जटामकुटमण्डितम् ।
सर्वलक्षणसंयुक्तं सर्वाभरणभूषितम् ॥ ७८ ॥

त्रिशूलमभयं सव्ये कपालं वाममन्यके[3] ।
हारकेयूरसंयुक्तं कटकैः कुण्डलैर्युतम् ॥ ७९ ॥

हृदादिवर्ण[4]पर्यन्तं स्वरूपं सौम्य[5]मुच्यते ।

---

इदानीं ध्यानार्हस्वरूपमुच्यते—इदं च रूपं चतुर्भुजोपेतं त्रिणयनम् जटामकुटालङ्कृतं सर्वलक्षणसम्पन्नं सर्वाभरणालङ्कृतम्— ॥ ७८ ॥

दक्षिणहस्तयोः त्रिशूलं अभयमुद्रां च बिभ्रत्, वामहस्तयोः कपालं वरदमुद्रां च दधत्, हारकेयूरालङ्कृतम् कटककुण्डलभूषितम्— ॥ ७९ ॥

—इत्येतावत्पर्यन्तं निरूपितं हृदयादिवर्णान्तरूपं सौम्यं भवति ।

---

1. 'चतुर्भुज त्रिणेत्रं' इत्यारभ्य 'पादादेर्भूतशोधनम्' इत्यन्तो भागः–ढ. द. पुस्तकयोः न दृश्यते ।
2. चतुर्भुज–ठ.
3. वरदवामके–क. ग. ट. ठ त. थ. प.
   वरवामके–छ. ध.
4. हृदादिवर्स–ग. च.
   हृदादिवाम–ख. (पा) ज.
   हृदयाद्यस्य–ध.
   हृदयादि–घ. छ. ट. त. प.
   हृदयादिं–थ.
   हृदयादिषु–क.
5. साम्य–ठ त.

शेषाः [1] रौद्रा[2]कृतिर्ज्ञेयाः [3] सर्वेषां रूपमीरितम् [4] ॥ ८० ॥

[शिवाङ्गविनियोगः]

शिवाङ्गैस्तु यजेद्देवं स्थापनादीनि सर्वशः [5] ।

[भूताङ्गविनियोगः]

भूताङ्गैश्चैव [6] षड्वक्त्र [7] ! पादादेर्भूत[8]शोधनम् ॥ ८१ ॥

अणौ [9] नामानि संयोज्य [10] भूताङ्गेषु समाचरेत् ।

---

शिष्टानि स्वरूपाणि रौद्राणि ज्ञेयानि । इत्थं सर्वाणि स्वरूपाणि निरूपितानि ॥ ८० ॥

शिवाङ्गमन्त्रैः देवं, ईशम्, यजेत् पूजां कुर्यात्, सर्वशः स्थापनादीनि प्रतिष्ठादिकामपि क्रियां शिवाङ्गैरेतैः कुर्यात्, भूताङ्गैश्चैव पञ्चभूतसम्बन्ध्यङ्गमन्त्रैः पादादिभूतशोधनं प्रपदप्रभृति व्योमान्तं मस्तकान्तं पञ्चभूतशुद्धिं कुर्यात् ॥ ८१ ॥

अन्यच्च—भूताङ्गेषु अणौ नामानि संयोज्य भूतशुद्ध्यर्थमन्त्रेषु

---

1. शेषं–त. थ. प.
2. रौद्रं–त. थ. प.
3. ज्ञेयं–त. थ. प.
   ज्ञेयः–क.
4. रूपमुच्यते–क. ख. ग. घ. च. छ. ज. ट. ठ. ढ. त. थ. द. ध. प.
5. शिवाङ्गैस्तुयजेद्देवं स्थापनादौ च सर्वशः–च.
   शिवाङ्गैर्यः पूजयेद्देवं स्थापनादिषु सर्वशः–प.
6. भूताङ्गेषु च–क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ढ. त. थ. द. प.
7. वैवस्स–क. ख. घ. छ. ज. झ. ट. ठ. ढ. त. थ. द. प.
8. पादादिभूत–क. ख. घ. छ. ज. ट. ठ. त. प.
9. अर्णे–ध.
   अणु–छ.
10. संयुज्य–घ.

[कूटाङ्ग-विद्याङ्गयोः विनियोगः]

कूटाङ्गैश्चैव[1] विद्याङ्गैः[2] प्रायश्चित्तं तु कारयेत् ॥ ८२ ॥

[शक्त्यङ्गविनियोगः]

शक्तीनां स्थापनाकाले[3] शक्त्यङ्गैस्तु[4] समाचरेत् ।

[सामान्याङ्गविनियोगः]

अन्येषां सर्वदेवानां सामान्याङ्गैस्तु योजयेत् ॥ ८३ ॥

[हृदयमन्त्रविभागः]

एवं षडङ्गमाख्यातं विशेषस्त्वधुनोच्यते[5] ।
केवलं ज्ञानजं चैव योगजं भूतजं तथा ॥ ८४ ॥

---

तत्तद्भूतनामानि च संयोज्य मन्त्रोच्चारणं कुर्यात् ॥

**कूटाङ्गैश्च विद्याङ्गैश्च** कूटाङ्गमन्त्रैः विद्याङ्गमन्त्रैश्च शैवाचार्य-स्वसमयाचारविप्लुतौ सत्याम्, शिष्याचारविप्लुतौ सत्यां च तत्तद्विध्युक्तरीत्या **प्रायश्चित्तं** कुर्यात् ॥ ८२ ॥

उमादिशक्तिदेवतास्थापनकाले शक्त्यङ्गमन्त्रैः समस्तक्रियाः **समा-चरेत्** ।

अवशिष्टसर्वदेवतास्थापनादिकार्येषु **सामान्याङ्ग**मन्त्रैः क्रियाः समा-चरेत् ॥ ८३ ॥

इदानीं एतेषां षडङ्गानां मध्ये **विशेषः उच्यते—केवलहृदयम्, ज्ञानजहृदयम्, योगजहृदयम्**, भूतजहृदयम्— ॥ ८४ ॥

---

1. कूटाङ्ग चैव–ज. ट.
2. विद्याङ्ग–ज.
3. स्थापने काले–ख. ग. च. ज. झ.
4. शक्त्यङ्गेषु–थ.थ.
5. विशेषमधुनोच्यते–क. ख. ग. घ. छ. ज. झ. ट. ठ. ढ. त. थ. द. ध. प.

कामजं[दं] च[1] क्रमेणैव हृदयं पञ्चधा भवेत् ।

[तत्र केवलहृदयम्]

शिवाङ्गं[2] हृदयं यत्तु[3] केवलं समुदाहृतम् ॥ ८५ ॥

[ज्ञानजहृदयम्]

सान्तं[4] यान्त[5]समायुक्तं आदिवर्गान्त[6]संयुतम् ।
ज्ञानात्महृदयं बिन्दुः[7] समासात् परिकीर्तितम् ॥ ८६ ॥

[योगजहृदयम्]

भूतान्तमनिलोपेतं तत्त्वान्तं स्वरसंयुतम् ।

---

—कामदहृदयं चेति हृदयं पञ्चविधं भवति ।

यत् शिवाङ्गमस्ति तदेव ह्रां इति केवलहृदयमिति कथितम् ॥ ८५ ॥

सान्तं हकारबीजम्, यान्तसमायुक्तं रेफसहितम्, आदिवर्गान्त-संयुतं औकारोपेतम्, बिन्दुः अनुस्वारः, एतेषां कूटः ह्रौं, ज्ञानात्महृदयं समासात् परिकीर्तितं इदं बीजं ज्ञानात्महृदयमित्युच्यते ॥ ८६ ॥

भूतान्तं हकारः, अनिलोपेतं यकारसहितः, स्वरसंयुतं—अकार-सहितः, एवं चेत् ह्य इति भवति । तत्त्वान्तं अन्यो हकारः स्वरसंयुतं

---

1. कामदश्च-थ.
2. शिवाङ्ग-क. घ. ट. थ.
3. यत्तत्-ढ.
4. सान्त-क. छ.
5. यान-ख.
   यान्तं-घ. छ. ठ. त.
6. वर्गाङ्ग-द.
7. बिन्दु ग. च.

शिवशक्तिसमोपेतं[1] योगजं[2] हृदयं विदुः ॥ ८७ ॥

[भूतजहृदयम्]

[3] पञ्चमं पार्थिवोपेतं द्वितीय[4]स्वरसंयुतम् ।
बिन्दुनादसमायुक्तं भूतजं हृदयं विदुः ॥ ८८ ॥

[कामजहृदयम्]

तत्त्वान्तमनिलान्तं च दशान्तान्त[5]कलान्वितम् ।
बिन्दुनादसमायुक्तं हृदयं सर्वकामदम् ॥ ८९ ॥

---

अकारसहितः, एवं चेत् ह इति भवति । उभयमपि **शिवशक्तिसमोपेतं** बिन्दुसहितं चेत् ह्यं हं इति भवति । **योगजं हृदयं विदुः** इदमेव योगज-हृदयबीजम् ॥ ८७ ॥

**पञ्चमं** हकारः **पार्थिवोपेतं** लकारसहितः **द्वितीयस्वरसंयुतं** आकारसहितः, **बिन्दुनादसमायुक्तं** अनुस्वारसहितः । इत्थं च आहत्य ह्लां इति भवति । **भूतजं हृदयं विदुः** इदमेव भूतजहृदयबीजम् ॥ ८८ ॥

**तत्त्वान्तं** हकारः, **अनिलान्तं** रेफः, **दशान्तान्तकलान्वितं** ऐकारसहितः, **बिन्दुनादसमायुक्तं** अनुस्वारसहितः, इत्थं च आहत्य ह्रैं इति भवति । **हृदयं सर्वकामदम्**---इदं च बीजं सर्वकामदहृदयबीजम् ॥ ८९॥

---

1. समायुक्तं-क. ख. घ. छ. ट. ढ. त. द. ध. प.
   समायुक्त--ढ.
2. योगज-छ.
3. पद्यमिदं-क. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न दृश्यते ।
4. द्वितीयं-क. ग. घ. च. छ. ज. झ. ट. ठ. ड. त. थ. द. ध. प.
5. दशान्तं च-ज. थ.
   दशान्तं-क.

हृदयादि नमोऽन्तं तु[1] सर्वेषां सह योजयेत्[2] ।

[केवलहृदयरूपम्]

ईशानं प्रथमं विद्यात्[3] शुक्लवर्णमुदाहृतम्[4] ॥ ९० ॥

[ज्ञानजहृदयरूपम्]

ईश्वरं ज्ञानहृदयं तप्तकाञ्चनसंनिभम् ।

[योगजहृदयरूपम्]

योगजं ब्रह्मरूपं स्यात् पीतवर्णं तु निर्दिशेत् ॥ ९१ ॥

---

हृदयादि नमोऽन्तं तु हृदयपूर्वं नमस्कारान्तं सर्वेषाम् पूर्वोक्तकेवल-हृदयादीनाम् पञ्चानामपि सहप्रयोगं कुर्यात् ।

तदित्थम्—

हां केवलहृदयाय नमः,

हौं ज्ञानजहृदयाय नमः,

ह्यं हं योगजहृदयाय नमः,

ह्यां भूतजहृदयाय नमः,

हैं कामदहृदयाय नमः—इति ।

इदानीं केवलहृदयादीनां स्वरूपं निरूप्यते—तत्र प्रथमं केवलहृदयं **ईशानस्वरूपम्**, तच्च **शुक्लवर्णम्** ॥ ९० ॥

द्वितीयं **ज्ञानहृदयं ईश्वराख्यं** भवति । इदं च स्वरूपं **तप्तकाञ्चन-वर्णम्** ।

**योगजं** हृदयं **ब्रह्मरूपं** भवति । इदं च रूपं **पीतवर्णम्** ॥ ९१ ॥

---

1. च-ध.
2. समयोजयेत्-थ.
3. विन्द्यात्-क. घ. ट. ठ. ढ. त. द. ध.
4. शुक्लवर्णसमन्वितम्-च.

[भूतजहृदयरूपम्]

भूतजं चेशरूपं तु[1] रक्त[2]वर्णमुदाहृतम् ।

[कामदहृदयरूपम्]

सादाख्यं कामदं विद्यात्[3] शुद्धस्फटिकसंनिभम् ॥ ९२ ॥

[केवलहृदयादिविनियोगः]

यजनं केवलेनैव स्थापनं ज्ञानजेन तु ।
प्रोक्षणं[4] योगजेनैव दीक्षाकर्म तु भूतजम्[5] ॥ ९३ ॥
सर्वकर्मविशेषेण कामदेनैव कारयेत् ।

---

भूतजं हृदयं ईशरूपं भवति । इदं च रक्तवर्णम् ।

कामदं हृदयं सादाख्यस्वरूपं भवति । इदं च रूपं शुद्धस्फटिकवर्णं भवति ॥ ९२ ॥

इदानीं केवलहृदयादीनां मन्त्राणां कार्यविशेषेषु विनियोगः निरूप्यते— केवलहृदयेन पूजनं कुर्यात्, ज्ञानजहृदयेन स्थापनं कुर्यात्, योगजहृदयेन प्रोक्षणमाचरेत् । भूतजहृदयेन दीक्षाकार्यं कुर्यात् ॥ ९३ ॥

---

1. चेश्वरं रूपं—ग. च. ट.
   चैश्वरं रूपं—ख.
   भूतमीश्वररूपं तु—ध.
2. रल—क. घ. ट. ठ. ढ. द. ध. प.
   तस—ज.
3. विन्द्यात्—क. घ. ट. ठ. ढ. त. थ. द. ध.
4. प्रोक्षणे—प.
5. दीक्षा वै भूतजेन तु—ख. (पा).
   दीक्षाकर्मणि भूतजम्—ध.

[अस्त्रमन्त्रभेदाः]

एवं हृदयमाख्यातं अस्त्रभेदमथ शृणु[1] ॥ ९४ ॥

शिवास्त्रं क्षुरिकास्त्रं च तथा पाशुपतास्त्रकम् ।
व्योमास्त्रं चैवाघोरास्त्रं अस्त्रं पञ्चविधं भवेत्[2] ॥ ९५ ॥

[अस्त्रमन्त्राणां अक्षरसंख्याः]

षडक्षरं शिवास्त्रं स्यात् क्षुरिका त्वष्ट[3]वर्णकम् ।

---

कामदहृदयविनियोगे विशेष उच्यते—कामदहृदयेन सर्वाणि यजनादिकर्माणि कुर्यात् । उक्तरीत्या केवलहृदयादिकं निरूपितम् । इतः परं शिवास्त्राद्यस्त्रमन्त्रभेदाः । निरूप्यन्ते । तच्छ्रवणाय सुब्रह्मण्यस्यावधानं क्रियते—शृण्विति ॥ ९४ ॥

शिवास्त्रम्, क्षुरिकास्त्रम्, पाशुपतास्त्रम्, व्योमास्त्रम्, अघोरास्त्रम्, इति अस्त्रमन्त्रः पञ्चधा भवति । पूर्वं शिवास्त्राद्यघोरास्त्रान्ताः षड्विधाः अस्त्रमन्त्राः उद्धृताः । अत्र —अस्त्रं 'पञ्चविधं भवेत्'—इति अस्त्रमन्त्राणां पञ्चविधत्वोक्तिः ब्रह्मास्त्रं परित्यज्येति मन्तव्या ॥ ९५ ॥

शिवास्त्रं षडक्षरैः विराजते । क्षुरिकास्त्रं अष्टाक्षरैः विलसति ।

---

1. अङ्गभेदमथ शृणु–प.
   मन्त्रभेदमथ शृणु–क. ट. ठ. ढ. त. थ. द. ध.
   अथ मन्त्रभेदं उच्यते–छ.
2. पञ्चास्त्रं चेति कीर्तितम्–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
3. क्षुरिकं त्वष्ट–प.
   क्षुरिका चाष्ट–ध.
   क्षुरिकास्त्रं–च.
   क्षुरिकाद्यष्ट–त.

पाशुपतं तु पञ्चार्णं[1] व्योमास्त्रं तु दशार्णकम्[2] ॥ ९६ ॥
चत्वारिंशदघोरास्त्रं एवं[3] पञ्चास्त्रमुच्यते ।

[अस्त्रमन्त्रज्ञानावश्यकता]

सर्वकर्मार्हकं[4] विद्यात्[5] पूजकः[6] सर्वकर्मसु ॥ ९७ ॥

---

पाशुपतास्त्रं पञ्चाक्षरैः शोभते । व्योमास्त्रं दशाक्षरैः भासते । पूर्वोद्धृत-पाशुपतास्त्रमन्त्रे षडक्षराण्युपलभ्यन्ते । [अत्र 'पाशुपतं तु पञ्चार्णम्' इत्युक्त्या पाशुपतास्त्रमन्त्रे पञ्चाक्षराणि प्रतिपाद्यन्ते । अतः अस्मिन् मन्त्रे प्रयोगानुरोधेन अक्षरसङ्ख्या निर्णेया] ॥ ९६ ॥

अघोरास्त्रं चत्वारिंशदक्षरैः प्रकाशते । इत्थं पञ्चास्त्रवर्णसङ्ख्या-परिस्थितिः । समस्ततत्त्व(मन्त्र)जन्मस्थलभूतमहालिङ्गस्य पीठे **पूजकः** बाह्यार्चकः शुद्धशैवः । स च पूर्वोक्तपञ्चास्त्रमन्त्रान् समस्तशिवपूजादि-क्रियार्हान् विजानीयात् ।

[पूर्वोद्धृताघोरास्त्रमन्त्रे त्रिचत्वारिंशदक्षराण्युपलभ्यन्ते । अत्र चत्वारिंश-दघोरास्त्रम्, इत्युक्त्या अघोरास्त्रमन्त्रे चत्वारिंशदक्षराण्येवेति प्रतिपाद्यते । अत्र प्रयोगानुरोधेन अक्षरसङ्ख्या निर्णेया] ॥ ९७ ॥

---

1. पञ्चास्त्रं-ज.
2. दशाक्षरम्-थ.
3. एव-छ.
4. कर्मार्णकम्-च.
5. विन्द्यात्-क. घ. ट. ठ. ढ. त. थ. द. ध.
6. पूजकं-ढ. द. प.

[पटलार्थनिगमनम्]

शिवाङ्गादि[1]षडङ्गानि कीर्तितानि षडानन! ।
अङ्गभेदो मयाऽऽख्यातः[2] मन्त्रजात[3]मथ[4]शृणु ॥ ९८ ॥

इति श्रीवातुलतन्त्रे शुद्धाख्ये सहस्रग्रन्थ-
संहितायां अङ्गभेदो नाम
अष्टमः पटलः

—o—

---

हे षण्मुख! शिवाङ्गादिषडङ्गानि शिवाङ्ग—भूताङ्ग—कूटाङ्ग—विद्याङ्ग—शक्त्यङ्ग—सामान्याङ्गेत्युक्तषडङ्गान्यपि कीर्तितानि कथितानि ॥

एवं अङ्गभेदः मया आख्यातः। एवं अङ्गभेदाः प्रोक्ताः। अथ मन्त्रजातं शृण तदनन्तरं मन्त्रजातं वक्ष्यते, अवधारय ॥ ९८ ॥

इति श्रीवातुलशुद्धाख्यतन्त्रसहस्रग्रन्थ-
संहिताव्याख्यायां अङ्गभेदो नाम
अष्टमः पटलः

—o—

---

1. शिवाङ्गानि–ग. च.
2. अङ्गभेदोऽयमाख्यातः–च.
   अङ्गभेदमिदं ख्यातम्–ध.
   अङ्गभेदमिदं प्रोक्तम्–प.
3. मन्त्रभेद–थ.
4. मतः–थ. ध.

अथ मन्त्रजातपटलः

## नवमः

--:--

[पटलार्थसूचनपूर्वकं मङ्गलम्]

[1] विष्णुब्रह्म[2] सुरेन्द्रचन्द्र[3] रविभिः सद्भूतिमद्भिः परैः[4]
देवाद्यैः परमन्त्रविद्भिरखिलैः[5] सद्भक्तिमद्भिर्नरैः ।
सद्भिः सत्पथ[6] वर्तिभिः[7] मनुमुनिव्रातैः[8] उपास्यं महत्
श्रीलिङ्गं शिवतत्त्वमुख्यनिलयं हृद्यं प्रपद्येऽनिशम्[9] ॥ १ ॥

---

उद्धृतं विधिवल्लिङ्गं ब्रह्मविष्ण्वीशपीठकम् ।
शिवशक्तिन्यस्तबीजं कलाध्वन्यासभूषितम् ॥
एकोनविंशतिविधैः अतिबालादिभेदतः ।
मन्त्रैः सर्वैरभिव्याप्तं भूयात् नः सर्वभूतये ॥

**विष्णुः, ब्रह्मा, सुरेन्द्रः, चन्द्रः, रविः,** ये च महाविभूतिशालिनः, ये च **देवाद्याः,** ये च समस्तपरमश्रेष्ठप्रासादादिमन्त्रज्ञाः, ये च **सद्भक्तियुक्ताः** मानवाः, ये च सत्पुरुषाः, ये च सन्मार्गगामिनः, ये च **मनुगणाः मुनिगणाश्च,** तैः सर्वैरपि सेव्यमानं पूज्यतमं **शिवतत्त्वस्य मुख्यस्थानं** मनोहरं **श्रीशिवलिङ्गं** सर्वदा अहं समाश्रये ॥ १ ॥

---

1. पद्यमिदं—ख. झ. फ. पुस्तकेषु न दृश्यते ।
2. ब्रह्मा विष्णु—ग. च.
3. इन्द्र—छ.
4. पदैः—ध.
5. रपरैः—ग. च.
6. सत्पद—क.
   तत्पथ—प.
7. वर्त्मभिः—ग. च.
8. मनुमुनीन्द्राद्यैः—ध.
9. प्रपद्ये धिया—ग. च. ज.

[लिङ्गस्वरूपमन्त्रजातनिरूपणप्रतिज्ञा]

अथातः संप्रवक्ष्यामि मन्त्रजातविधिं शृणु [1] ।
यस्मात् मन्त्राश्च जायन्ते [2] मन्त्रजातमिति स्मृतम् [3] ॥ २ ॥

तस्मान्मन्त्रमय लिङ्गं वक्ष्ये संक्षेपतः शृणु ।

[तत्प्रयोजनकथनम्]

सर्वलोकहितार्थाय सर्वप्राणिहिताय च ॥ ३ ॥

---

हे महासेन! अङ्गभेदनिरूपणानन्तरं मन्त्रजातं प्रवक्ष्यामि, शृणु । **यस्मात्** समस्तप्रपञ्चसर्गस्थितिविलयकारणतत्त्वतः परार्धकोटिभेदभिन्नाः **मन्त्राः** तत्तद्देवतास्वरूपाः भूत्वा **जायन्ते**, तस्मात् पूर्वोक्तमन्त्रजाताकारभूतं तदेव लिङ्गं **मन्त्रजातमिति** ज्ञायते ॥ २ ॥

**तस्मात्** कारणात् जगज्जन्मादिकारणं लिङ्गं सर्वमन्त्रस्वरूपं स्यात् । हे षडानन! **सर्वलोकहिताय सर्वात्महिताय च**— ॥ ३ ॥

---

1. मन्त्रजातं ततः शृणु–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
   मन्त्रजातमथ शृणु–ग. च.
   मन्त्रजातं षडानन–फ.
2. मन्त्राणि जायते यस्मात्–क. ग. च.
   मन्त्रश्च जायते यस्मात्–ख. (पा).
   यस्मान्मन्त्राणि जायन्ते–ध. प.
   यतो मन्त्राणि जायन्ते–च.
3. मतः स्मृतम्–च.
   इत आरभ्य "तस्मात् सर्वप्रयत्नेन मन्त्रजातमिदं मतम्" (३६) इत्यन्तो भागः फ. पुस्तके न दृश्यते ॥

सर्वमन्त्र[1]प्रसिद्ध्यर्थं भुक्तिमुक्त्यर्थमुच्यते ।

[मन्त्रमयलिङ्गोद्धरणक्रमः]

शालिपिष्टाक्तसूत्रेण सूत्रपातमथाचरेत्[2] ॥ ४ ॥

गोमयालेपिते[3] क्षेत्रे निम्नोन्नतविवर्जिते ।

प्राक्सूत्राणि सप्तदश तथैवोदग्गतानि च[4] ॥ ५ ॥

पङ्क्तयः षोडश स्युस्ताः प्रागुत्तरमुखास्तथा[5] ।

षट्पञ्चाशत्समाधिक्यकोष्ठानि द्विशतानि च ॥ ६ ॥

---

सर्वमन्त्रप्रसिद्ध्यर्थं इहपरसौख्यार्थं च मन्त्रमयलिङ्गोद्धरणं निरूप्यते । निम्नोन्नतविवर्जिते गोमयलेपिते स्थण्डिलप्रदेशे **शालिपिष्टाक्तपट्टसूत्रेण सूत्रपातं आचरेत्** । प्राक्पश्चिमगतानि सूत्राणि सप्तदश, तथैव दक्षिणोत्तरगतानि सूत्राणि च सप्तदश पातयेत् ॥ ४-५ ॥

एवं पातितं चेत्—प्राक्पश्चिममुखाः दक्षिणोत्तरमुखाश्च **पङ्क्तयः षोडश** षोडश **स्युः** । एवं षोडशपङ्क्तिनिष्ठकोष्ठानि गणनया आहत्य **षट्पञ्चाशदुत्तरद्विशतानि** भवन्ति ॥ ६ ॥

---

1. तन्त्रमन्त्र–ध.
2. सूत्रपातमुदाचरेत्–ट.
3. गोमयालेपने–थ.
4. प्राक्पश्चिमाः षोडश स्युः प्रागुत्तरमुखास्तथा–ग. च. ज.
   प्राचीस्तन्तून् यथा सप्तदशोत्तरगतांस्तथा–झ.
5. प्राङ्मुखाश्चोत्तरामुखाः–ख. ग. छ.
   प्रागुदङ्मुखास्तथा–क. घ. छ. ट. ठ. ड. त. द. ध. प.

पश्चिमादिन्द्रपर्यन्तं[1] लिङ्गार्थं वीथिकास्त्यजेत्[2] ।
पश्चात् चत्वारि चत्वारि वीथ्योः[3] कोष्ठानि मध्यमे ॥ ७ ॥
संरक्ष्य पार्श्वद्वितये[4] षट्षट्कोष्ठानि लोपयेत् ।
तदूर्ध्वे[5]पङ्क्तिं संरक्ष्य तदूर्ध्वं[6] द्वादश[7] क्षिपेत् ॥ ८ ॥

---

प्रतीचीमारभ्य प्राचीपर्यन्तं लिङ्गनिर्माणार्थं वीथिकाः त्यजेत् । षोडशपङ्क्तीकृतस्थानमध्ये द्वयोर्द्वयोः वीथ्योः चत्वारि चत्वारि कोष्ठानि— ॥ ७ ॥

—संस्थाप्य, मध्यसंरक्षितकोष्ठपार्श्वद्वये षट् षट् कोष्ठानि मार्जयेत् । तयोः विलोपितयोः पङ्क्त्योरुपरि या पङ्क्तिरस्ति तां संस्थाप्य तदूर्ध्वं द्वादशकोष्ठानि संरक्षेत् ॥ ८ ॥

---

1. पश्चिमादीन्द्रपर्यन्तं–ग. झ.
   पश्चिमाद्रिपर्यन्तं–घ. ट.
2. वीथिकां त्यजेत्–ग. च. झ.
   वीथिकाः सृजेत्–ध.
3. विध्योः-घ. ट. छ. द. ध.
   विध्यः-ठ. प.
   वीध्याः–ढ.
   वीध्यः-ग. च. ज. झ.
4. पार्श्वद्वितयोगः–ग. च.
   पार्श्वद्वितीयोः–क.
   पार्श्वद्वितययोः–ध.
5. तदूर्ध्वं–थ.
   तदूर्ध्वे–ट.
6. तदूर्ध्वे–ग. च. झ.
7. द्वादशं–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.

पार्श्वयोरुभयोस्तत्र[1] द्वे द्वे कोष्ठे च[2] लोपयेत् ।
*तदूर्ध्वे दश कोष्ठानि रक्षेत्[3] पार्श्वत्रयं[4] त्यजेत् ॥ ९ ॥
[5]ततः षट्कोष्ठकं रक्षेत्[6] पार्श्वयोः पञ्च पञ्च च[7] ।
[8]लोपयेच्च तदूर्ध्वे तु रक्षेत्[9] चत्वारि पार्श्वयोः ॥ १० ॥

---

तस्यां संरक्षितद्वादशकोष्ठपङ्क्तौ पार्श्वद्वितये द्वे द्वे कोष्ठे विलोपयेत् । तस्याः द्वादशपदपङ्क्तेरुपरितनपङ्क्तौ दश पदानि संस्थाप्य तस्याः पङ्क्तेः द्वयोरपि पार्श्वयोः त्रीणि त्रीणि कोष्ठानि विलोपयेत् ॥ ९ ॥

दशकोष्ठपङ्क्तेरुपरितनपङ्क्तौ षट्कोष्ठानि संस्थाप्य तस्याः पङ्क्तेः पार्श्वद्वयेऽपि पञ्च पञ्च कोष्ठानि लोपयेत् । तदूर्ध्वपङ्क्तौ चत्वारि कोष्ठानि संस्थाप्य तत्पार्श्वद्वयेऽपि— ॥ १० ॥

---

1. तस्याः पार्श्वयोरुभयोः–ठ. ढ. थ.
   पर्श्वयोरुभयोस्तस्याः–क. ख. द. प.
   पर्श्वयोरुभयोस्तस्य–घ. छ. ट. त. ध.
2. कोष्ठानि–ग. च. झ.
   * पद्यार्धमिदं 'त' पुस्तके न दृश्यते ।
3. रक्षयेत्–छ.
4. पार्श्वद्वयम्–थ.
5. 'ततः षट्कोष्ठकं' इत्यारभ्य 'तद्वदाचरेत्' इत्यन्तो भागः–त. पुस्तके न दृश्यते ।
6. रक्ष्य–क. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. ध. प. फ.
7. पञ्च लोपयेत्–क.
8. 'लोपयेच्च' इत्यारभ्य 'पञ्च लोपयेत्' इत्यन्तो भागः–क. ज. पुस्तकयोः न दृश्यते ।
9. रक्ष्य–क. ग. घ. च. छ. ज. झ. ठ. ड. ढ. त. थ. द. फ.
   रक्षयेत्–ध.
   रक्ष्यः–द.

षट् षट् कोष्ठानि[1] संत्यज्य[2] तदूर्ध्वे[3] तद्वदाचरेत्[4] ।
ततः षट्कोष्ठकं रक्षेत्[5] पार्श्वयोः पञ्च लोपयेत्[6] ॥ ११ ॥
[7]तदूर्ध्वे दश संरक्ष्य[8] पार्श्वयोः त्रि त्रि[त्रीणि]लोपयेत् ।
तदूर्ध्वे[9] द्वादशं[श]रक्षेत्[10] द्वे द्वे पार्श्वे च लोपयेत् ॥ १२ ॥

---

षट् षट् कोष्ठानि लोपयेत् । तदूर्ध्वपङ्क्तावपि पूर्ववत् चत्वारि कोष्ठानि संस्थाप्य तत्पार्श्वद्वयेऽपि षट् षट् कोष्ठानि लोपयेत् । पूर्वसंरक्षित-चतुष्कोष्ठपङ्क्तेः ऊर्ध्वपङ्क्तौ षट् कोष्ठानि संरक्ष्य तत्पार्श्वद्वयेऽपि पञ्च पञ्च कोष्ठानि लोपयेत् ॥ ११ ॥

पूर्वसंरक्षितषट्कोष्ठपङ्क्तेरूर्ध्वपङ्क्तौ दशकोष्ठानि संरक्ष्य तत्पङ्क्तेः

---

1. षट् कोष्ठानि च–ग. च. झ.
2. संत्यक्त्वा–घ. छ. ठ. ढ. थ. द. ध.
3. ऊर्ध्वे तु–प.
4. एतदनन्तरं—
   "तदूर्ध्वपङ्क्तिद्वितये चतुष्कोष्ठानि रक्षयेत् ।
   पार्श्वयोश्च द्वयोः षट्कोष्ठानि च परित्यजेत् ॥"
   इति पद्यं–ग. च. झ. पुस्तकेषु दृश्यते ।
   संस्कृत-कर्णाटकव्याख्यासहितयोः–ज. क. पुस्तकयोः, अन्येषु–क. घ. छ. ट. ठ. ड. ढ. त. थ. द. प. फ. पुस्तकेषु च न दृश्यते । अतः अस्य मूले संयोजनं न कृतम् ।
5. रक्ष्य–क. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द.
6. इदमर्धं–त. पुस्तके न दृश्यते ।
7. 'तदूर्ध्वे' इत्यारभ्य 'ब्रह्मविष्णवीशपीठकम्' इत्यन्तो भागः–प. पुस्तके न दृश्यते ।
8. संरक्षेत्–ख.
9. तदूर्ध्वं–छ.
10. रक्ष्य–घ. छ. ट. ठ. ढ. थ.

तदूर्ध्वं[1] पङ्क्तिं संरक्ष्य ततो लिङ्गं द्विपङ्क्तितः ।
पङ्क्त्योश्चत्वारि[2] चत्वारि कोष्ठान्यूर्ध्वे[3] च रक्षयेत्[4] ॥ १३ ॥
षट् षट् कोष्ठानि पङ्क्त्योश्च पार्श्वयोरुभयोस्त्यजेत्[5] ।

[लिङ्गपीठस्वरूपम्]

एवं लिङ्गं[6] समासाद्य ब्रह्मविष्ण्वीशपीठकम्[7] ॥ १४ ॥

---

पार्श्वद्वये च त्रीणि त्रीणि कोष्ठानि लोपयेत् । तद्दशकोष्ठपङ्क्तेरुपरितन पङ्क्तौ द्वादश कोष्ठानि संस्थाप्य तत्पङ्क्तेः पार्श्वद्वयेऽपि द्वे द्वे कोष्ठे लोपयेत् ॥ १२ ॥

पूर्वोक्तद्वादशकोष्ठपङ्क्तेरुपरितनपङ्क्तौ षोडशकोष्ठान्यपि संरक्षयेत् । तदुपरि पङ्क्तिद्वयेन लिङ्गाकारो भवति । पूर्वसंरक्षितषोडशकोष्ठपङ्क्तेरुपरि उभयोः पङ्क्त्योः चत्वारि चत्वारि कोष्ठानि संरक्ष्य— ॥ १३ ॥

---

1. तदूर्ध्वं-क.
   तदूर्ध्वे-ढ. द. ध.
2. पङ्क्तिश्चत्वारि-ट.
3. न्यूर्ध्वं-ग. च. झ.
4. इत ऊर्ध्वं—"एका सर्वान्तरा" इत्यारभ्य 'मन्मयी मदधिष्ठिता' इत्यन्तो भागः-प. पुस्तकवर्जं अन्येषु पुस्तकेषु दृश्यते । एवं-प. पुस्तके अन्येषु च पुस्तकेषु 'मन्मयी मदधिष्ठिता' इत्यतः परं 'अन्या च' इत्यारभ्य 'रुद्ररूपिणी' इत्यन्तं श्लोकद्वयं अधिकं दृश्यते । विषयानुगुणं सर्वमत्र टिप्पण्यां दर्शितम् ।
5. पार्श्वयोरुभयोश्चैव षट् कोष्ठानि परित्यजेत्-ग. च. झ.
   षट् षट् कोष्ठाश्च पङ्क्त्योश्च पार्श्वयोरुभयोस्त्यजेत्-ठ. त. ध.
   षट् षट् कोष्ठानि पङ्क्त्याश्च पार्श्वयोरुभयोस्त्यजेत्-क.
6. अङ्गं-ख.
7. पीठिकम्-ढ.

[लिङ्गपीठषडङ्गानि]

पट्टिकाकञ्ज[1]कण्ठाब्जपट्टिकाऽऽज्यप्रधारिका:[2] ।
षडङ्गानि च पीठस्य क्रमात् प्रोक्तानि षण्मुख ! ॥ १५ ॥

---

—तयोः पङ्क्त्योरुभयपार्श्वयोरपि पट् पट् कोष्ठानि लोपयेत् । पूर्वोक्तप्रकारेण सृष्टिस्थितिसंहारकर्तृब्रह्मविष्णुरुद्रात्मकपीठयुक्तं लिङ्गं कुर्यात्—अत्र लिङ्गं ब्रह्मविष्णुरुद्रात्मकपीठयुक्तमित्युक्ते—'शक्तिपीठकं लिङ्गं' इत्यस्यापवादो भवति । तस्य परिहारोक्तिरेवम्—तद्यथा—शिव एव लिङ्गम् । तस्य दिव्यशक्तिरेव पीठम् । सा च दिव्यशक्तिः सृष्टिस्थितिसंहारकर्त्री । अत एव ब्रह्मविष्णुरुद्रात्मकं भवति इत्युक्ते अपवादपरिहारो भवति । अत्रोदाहरणं कूर्मे ईश्वरगीतासु—

"एका सर्वान्तरा शक्तिः करोति विविधं जगत् ।
आस्थाय ब्रह्मणो रूपं मन्मयी मदधिष्ठिता ॥"

"अन्या च शक्तिर्विपुला संस्थापयति मे जगत् ।
भूत्वा नारायणोऽनन्तः जगन्नाथो जगन्मयः ॥

तृतीया महती शक्तिः निहन्ति सकलं जगत् ।
तामसी मे समाख्याता कालाख्या रुद्ररूपिणी ॥"

इति ॥

हे षण्मुख ! लिङ्गपीठस्य अधःपट्टिका अधः कञ्जं कण्ठः ऊर्ध्वाब्जं ऊर्ध्वपट्टिका आज्यप्रधारिका चेति क्रमात् षडङ्गानि भवन्ति । कण्ठस्य वृत्तमित्यप्यभिधानमस्ति ॥ १५ ॥

---

1. कर्ण–ग. च. झ.

2. प्रधारिका–क. घ. छ. ठ. ढ. त. प.

[शिवलिङ्गे षडङ्गमन्त्राणां विन्यासविधिः]

मन्त्रन्यासक्रमं लिङ्गे शृणु वत्स समासतः[1] ।
अङ्गभेदे[2] षडङ्गानि प्रोक्तमन्त्राणि विन्यसेत् ॥ १६ ॥

[विन्यासक्रमः]

हृदयं पट्टिकायां तु शिरः कण्ठे शिखां गले ।
कवचं कमले नेत्रं पट्ट्यामस्त्रं च धारिके[3] ॥ १७ ॥

[आधारादिषट्चक्रेषु शिवबीजाक्षरन्यासविधिः]

प्रोक्तः षडङ्गविन्यासः[4] वक्ष्याम्याधार[5]षट् क्रमात् ।

---

हे वत्स! शिवलिङ्गे मन्त्रन्यासक्रमं सङ्ग्रहेण वक्ष्ये—श्रूयताम् । पूर्वोक्ताङ्गभेदपटले प्रोक्तान् षडङ्गमन्त्रान् शिवलिङ्गे क्रमात् विन्यसेत् ॥ १६ ॥

**पट्टिकायां तु हृदयम्** अधःपट्टिकायां हृदयमन्त्रम्, **कण्ठे शिरः** अधःकमले शिरोमन्त्रम्, **शिखां गले** वृत्तस्थाने शिखामन्त्रम्, **कमले कवचम्** ऊर्ध्वकण्ठे कवचमन्त्रम्, **नेत्रं पट्ट्याम्** ऊर्ध्वपट्टिकायां नेत्रमन्त्रम्, **धारिके अस्त्रं च** आज्यप्रधारिकायां अस्त्रमन्त्रं च, विन्यसेदिति शेषः । अत्र मूले छन्दोऽनुरोधेन धारिके इति प्रयोगः ॥ १७ ॥

**षडङ्गविन्यासः प्रोक्तः** षडङ्गमन्त्रविन्यासः कथितः । **आधारषट् क्रमाद्वक्ष्ये** आधारादीनि षट् चक्राणि क्रमात् **वक्ष्यामि । कण्ठस्याधः**

---

1. समाहितः–ज. (पा).
2. अङ्गभेद–ग. च. झ.
3. मस्त्रं प्रधारिके–च.
   मस्त्रं चाधारिके–प.
4. प्रोक्तं षडङ्गविन्यासं–क. ग. छ. ज.
5. वक्ष्ये चाधार–क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.

कञ्जस्य चाध[1] आधारं[2] वादिसान्तं[3] चतुर्दले[4] ॥ १८ ॥
स्वाधिष्ठाने च षट्पत्रे बादिलान्तं[5] क्रमात्[6] न्यसेत् ।
ततो मणौ[7] दशदले डादिफान्तं[8] न्यसेत्ततः[9] ॥ १९ ॥

---

अधःपङ्क्तिका आधारस्थानमिति विज्ञेया । वादिसान्तं चतुर्दले चतुष्कोष्ठान्येव चतुष्पत्राणि विद्यात् । तेषु क्रमात् व-श-ष-स इति वकारादिसकारान्ताक्षराणि विन्यसेत् ॥ १८ ॥

स्वाधिष्ठाने षट्पत्रे च अधःकञ्जमेव स्वाधिष्ठानमिति ज्ञायते । तस्मिन् स्वाधिष्ठाने षट्कोष्ठकात्मकषट्पत्राणि सन्ति । बादिलान्तं क्रमात् न्यसेत् तेषु षट्सु पत्रेषु ब-भ-म-य-र-ल इति बकारादि—लकारान्तषड्वर्णानि क्रमात् न्यसेत् । एवं प्रकारेण सकलान्यपि कोष्ठानि दलानीति विज्ञेयानि । ततो मणौ दशदले स्वाधिष्ठानस्योपरितनं स्थानं मणिपूरकमित्युच्यते । तस्मिन् दश दलानि सन्ति । डादिफान्तं न्यसेत् ततः—तेषु दलेषु ड. ढ. ण. त. थ. द. ध. न. प. फ. इति डकारादिफकारान्तदशबीजानि क्रमात् विन्यसेत् ॥ १९ ॥

---

1. कञ्जस्याधश्च–थ.
2. कञ्जस्याथ श्चथाधारं–क. घ. छ. ट. ठ. द. च.
   कञ्जस्य चाधमाधारे–ध.
   कञ्जस्य च मदाधारं–त.
3. शान्तं–ध.
4. चतुर्दशे–च.
5. वादिलान्तं–ग. च. ज. प.
6. ततो–ग. च. ज.
7. मणौ मणिपूरे ह, ओ, म, ड, अ—ख. टिप्पण्याम् ।
8. कादिभान्तं–ध.
9. ततो न्यसेत्–ग. च.
   प्रविन्यसेत्–झ.

[1]हृदये द्वादशदले कादि ठान्तं न्यसेत्ततः[2] ।
पङ्क्त्यां कण्ठे[3] षोडशके आदिवर्गं[4] न्यसेत्ततः ॥ २० ॥
अज्ञायां द्विदले चोर्ध्वं[5] ळक्षयुग्मं न्यसेत्ततः[6] ।

---

ततः तस्य मणिपूरकस्योपरि **हृदये** ऊर्ध्वकञ्जाख्यहृदयस्थाने **द्वादशदले** द्वादशसु दलेषु **कादिठान्तं** क ख ग घ ङ च छ ज झ ञ ट ठ इति ककारादिठकारान्तद्वादशवर्णान् **न्यसेत्** क्रमात् विन्यसेत् । **ततः** द्वादशदलोपेतहृदयस्थानोपरि **पङ्क्त्याम्**— ऊर्ध्वपङ्क्तिकासंज्ञके **षोडशके** षोडश-दलयुते **कण्ठे** कण्ठस्थाने **आदिवर्गं** अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः इति अकारादिविसर्गान्तषोडशवर्णान् **न्यसेत्** क्रमात् विन्यसेत् ॥ २० ॥

ततः ऊर्ध्वं कण्ठस्थानादुपरि **द्विदले आज्ञायाम्**, आज्यप्रधारि-काख्याज्ञाचक्रचतुष्कोष्ठमध्यस्थकोष्ठद्वये **ळक्षयुग्मं न्यसेत्** ळ, क्ष इत्यभिधान-

---

1. इदमर्धं–ध. पुस्तके न दृश्यते ।
2. ठान्तं प्रविन्यसेत्–ग. च. झ.
3. कर्णे–ग. च. झ.
4. आदिसर्गं–क. घ. छ. ट. ठ. ढ. त.
5. चोर्ध्वे–क. ख. घ. छ. झ. ठ. त. थ. द. ध.
6. हक्षयुग्मं न्यसेत्ततः–ग. च.
   हं क्षं युग्मं न्यसेत्ततः–क.
   हं क्षं युग्मं प्रविन्यसेत्–झ.

इत्येकपञ्चाशद्वर्णाः रुद्रबीजानि मुख्यतः [1] ॥ २१ ॥

---

वर्णद्वयं क्रमात् न्यसेत् । इति एकपञ्चाशद्वर्णाः पूर्वोक्तरीत्या अकारादि-क्षकारान्तैकपञ्चाशद्वर्णाः मुख्यतः रुद्रबीजानि मुख्यतः रुद्रमूर्तिबीजानि भवन्ति ॥ २१ ॥

एतानि शिवचक्राणि एतेषु आधार–स्वाधिष्ठान–मणिपूरक–अनाहत-विशुद्धि–आज्ञाऽभिधानेषु षट्चक्रेषु शिवबीजाक्षरन्यासात् एतानि शिवचक्राणि भवन्तीति शेषः । अथो शिवचक्रन्यासानन्तरम् शक्तिचक्राणि न्यसेत् शक्तिचक्रन्यासं कुर्यात् । रुद्राभिधानानि एकपञ्चाशद्वर्णानि शिव-मन्त्रोद्धरणकाले शिवबीजानि भवन्ति । तान्येव शक्तिमन्त्रोद्धरणकाले शक्तिबीजानि च भवन्ति । एतेषां एकपञ्चाशद्वर्णानां रुद्रशक्त्युभयबीजत्वात्

---

1. इतः परं—क. ख. घ. पुस्तकेषु—

“ शारदातिलके—

श्रीकण्ठोऽनन्तसूक्ष्मौ च त्रिमूर्तिरमरेश्वरः ।
अर्घीशो भारभूतिश्च तिथीशः स्थाणुको हरः ।
झण्डीशो जातुकिः सद्योजातश्चानुग्रहेश्वरः ।
अक्रूरश्च महासेनः षोडश स्वरमूर्तयः ।
पश्चात् क्रोधेशचण्डेशपञ्चान्तकशिवोत्तमाः ॥
अथैकरुद्रकूर्मैकनेत्राश्च चतुराननः ।
अजेशशर्वसोमेशलाङ्गुलीदारुकस्तथा ॥
अर्धनारीश्वरश्चोमाकान्तश्चाषाढिदण्डिनौ ।
स्युरत्रिमीनमेषाख्यलोहिताश्च शिखी तथा ॥
सकलाण्डद्विलण्डेशौ महाकालकपालिनौ ।
भुजङ्गेशपिनाकेशखड्गीशाख्यबकास्तथा ॥
श्वेतभृग्वीशलकुलिशिवाः संवर्तकस्तथा ।
एते रुद्राः स्मृता रक्ताश्वतशूलकपालकाः ॥ ”

इत्यधिकं दृश्यते ॥

इदं च ‘ इत्येके, त्यादिपद्यार्धं-ख. पुस्तके न दृश्यते ।

[आधारादिषट्चक्रेषु शक्तिचक्रन्यासविधिः]

**एतानि शिवचक्राणि शक्तिचक्राण्यथो न्यसेत्** [1] ।

---

उभयरूपत्वमपीति निश्चयः । **आधारादिगलान्तं च** आधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धिचक्रेषु **पूर्ववत्** यथापूर्वं शिवचक्रविन्यासावसरे चतुष्कोष्ठेषु चतुर्वर्णानि षट्कोष्ठेषु षड्वर्णानि इत्यादिरीत्या **वर्णानि** शकारादिशक्तिबीजानि **न्यसेत्** विन्यसेत् ॥ २२ ॥

---

1. ण्यथोच्यते–ग. च. झ.

इतः परं क. ख. घ. पुस्तकेषु—

" शारदातिलके—

पूर्णोदरी स्याद्विरजा शाल्मली तदनन्तरम् ।
लोलाक्षी वर्तुलाक्षी च दीर्घघोणा समीरिता ॥
सुदीर्घमुखिगोमुख्यौ दीर्घजिह्वा तथैव च ।
कुण्डोदर्यूर्ध्वकेशी च तथा विकृतमुख्यपि ॥
ज्वालामुखी तथा ज्ञेया पश्चादुल्कामुखी स्मृता ।
सुश्रीमुखी च विद्यामुख्येताः स्युः स्वरशक्तयः ॥
महाकाली सरस्वत्यौ सर्वसिद्धिसमन्विते ।
गौरीत्रैलोक्यविद्या स्यात् मन्त्रशक्तिस्ततःपरम् ॥
आत्मशक्तिर्भूतमाता तथा लम्बोदरी मता ।
द्राविणी नागरी भूयः खेचरी चापि मञ्जरी ॥
रूपिणी विरची पश्चात् कालोदर्यपि पूतना ।
स्याद्भद्रकाळियोगिन्यौ शङ्खिनी गर्जिनी तथा ॥
काळरात्रिः कुर्दनी च कपर्दिन्यपि वाङ्मयी ।
जया च सुमुखीश्वर्यौ रेवती माधवी तथा ॥
वारुणी वायवी प्रोक्ता पश्चाद्रक्षोविदारिणी ।
ततश्च सहजा लक्ष्मीः व्यापिनी माययाऽन्विता ॥
एता रुद्राङ्गपीठस्थाः सिन्धूरारुणविग्रहाः ।
रक्तोत्पलकपालाभ्यां अलङ्कृतकराम्बुजाः ॥ "

इत्यधिकं दृश्यते ।

आधारादिगलान्तं च[1] वर्णानि[2] पूर्ववन्न्यसेत्[3] ॥ २२ ॥
आज्ञायां तु विशेषोऽस्ति[4] शक्तिपक्षे हळे[5] न्यसेत् ।

[उक्तशिवशक्तिचक्रयोः वर्णाधिदेवतापरिकल्पनविधिः]

वर्णाधिदेवतास्तत्र[6] पूर्ववत् परिकल्पयेत् ॥ २३ ॥

[सूक्ष्मपञ्चाक्षरन्यासविधिः]

एवं षट्चक्रमाख्यातं मूर्तिमन्त्रं[7] न्यसेत्ततः[8] ।

---

**आज्ञायां तु** आज्ञाचक्रे तु **विशेषोऽस्ति** शिवचक्रापेक्षया विशेषो वर्तते । **शक्तिपक्षे ह ळे न्यसेत्** शक्तिचक्रेषु वर्णविन्यासावसरे आज्ञाचक्रसमीपस्थचक्रद्वयमध्यगतचतुष्कोष्ठमध्यवर्तिदळद्वये ळकारक्षकारौ विहाय हकारळकारौ विन्यसेत् । अयं शिवचक्रापेक्षया शक्तिचक्रे विशेषः । तत्र तयोः शिवचक्रशक्तिचक्रयोः **वर्णाधिदेवताः** वर्णानां अधिदेवताश्च **पूर्ववत् परिकल्पयेत्** चक्रभेदपटले रुद्र-शक्तिदेवताः यथा न्यासीकृताः, तद्वदत्रापि विन्यसेत् ॥ २३ ॥

---

1. गलान्तं तु–ध.
2. वर्णांश्च–थ.
3. न्यसेद्वर्णानि पूर्ववत्–ग. च. झ.
4. षट्चक्राण्युदितान्येवं–झ.
   आज्ञायां तु विशेषेण–ग. च. ज.
5. (ह) क्षळं–. च.
   हळे–ख. थ. ध.
   हळं–प.
6. वर्णादिदेवतास्तत्र–ग. च. झ.
   वर्णाधिदैवतं तत्र–ट. ठ. थ.
7. मूर्तं मन्त्रं–थ.
   मूलमन्त्रं–ध.
   मूर्तमन्त्रं–घ. छ. ट. ढ. त. द.
8. प्रविन्यसेत्–ग. च. झ.

नादं लिङ्गे च[1] विन्यस्य[2] बिन्दुमाज्यप्रधारिके[3] ॥ २४ ॥
पट्टयादिकञ्जपर्यन्तं मकारं विन्यसेत् ततः[4] ।
वृत्ते तूकारं विन्यस्य[5] चाकारं[6] कञ्जपट्टके[7] ॥ २५ ॥

---

एवं एवंप्रकारेण **षट्चक्रं** षट्चक्रन्यासः **आख्यातं** प्रोक्तः । **ततः** षट्चक्रन्यासानन्तरम् **मूर्तिमन्त्रं न्यसेत्** मूर्तिमन्त्रन्यासं कुर्यात् । **नादं** नादाख्यहकारम् **लिङ्गे च** आज्यप्रधारिकापङ्क्त्युपरिचतुष्कोष्ठमध्ये **विन्यस्य** न्यासं कृत्वा **आज्यप्रधारिके** आज्यप्रधारिकायाम् **बिन्दुं** प्रणवं ओङ्कारं विन्यस्य— ॥ २४ ॥

**ततः पट्टयादिकञ्जपर्यन्तं मकारं विन्यसेत्** ऊर्ध्वपट्टिकामारभ्य ऊर्ध्वकञ्जपर्यन्तं मकारन्यासं कुर्यात् । **वृत्ते तु** वृत्ताख्यकण्ठस्थाने **उकारं विन्यस्य** उकारन्यासं कृत्वा **अकारं च कञ्जपट्टके** अकारं अधः कञ्जपट्टिकायां न्यसेत ॥ २५ ॥

---

1. तु–प.
2. विन्यसेत्–ट.
3. प्रसारिके–ग. च. झ. थ.
4. क्रमात्–ग. च. ज. झ.
5. वृत्ते उकारं विन्यस्य–ग. च. ज. झ.
   वृत्ते तूकारकं न्यस्य–प.
   वृत्ते तूकारकं न्यस्त्वा–क. घ. छ. ट. ठ. त. थ. द.
   वृत्ते क्षकारकं न्यस्य–ध.
6. हकारं–क. ख. ग. घ. च. छ. ज. झ. ट. ठ. ड. ढ. त. थ. द. प.
   यकारं–घ.
7. कमलपट्टिके–क. घ. च. ट. ठ. त. थ. द.
   कमलपट्टके–ख.
   कञ्जपट्टिके–ग. च. ज. झ.

[स्थूलपञ्चाक्षरन्यासविधिः]

सूक्ष्मपञ्चाक्षरं प्रोक्तं[1] स्थूलपञ्चाक्षरं शृणु ।
नकारादि[2] यकारान्तं पञ्चार्णं तत्र विन्यसेत् ॥ २६ ॥

[षडक्षरन्यासविधिः]

पञ्चाक्षरमिदं[3] प्रोक्तं षडक्षरमथोच्यते ।
तारं[4] लिङ्गे प्रविन्यस्य पट्टिकायां नकारकम्[5] ॥ २७ ॥

---

एवंप्रकारेण ह ओं म उ अ इति **सूक्ष्मपञ्चाक्षरं** उक्तं भवति । इतः परं **स्थूलपञ्चाक्षर**न्यासः उच्यते—**शृणु** । **नकारादियकारान्तं पञ्चार्णं** नकारमकारशिकारवाकारयकाराभिधानानि "नमः शिवाय" इति पञ्चाक्षराणि । तत्र आधार-स्वाधिष्ठान-मणिपूरक-अनाहत-विशुद्धीत्युक्तपञ्चचक्रेषु **विन्यसेत्** क्रमात् न्यसेत् ॥ २६ ॥

**पञ्चाक्षरमिदं प्रोक्तम्**—पञ्चाक्षरं उक्तम् । **षडक्षरमथोच्यते** अनन्तरं षडक्षरन्यासः वक्ष्यते । **तारं लिङ्गे प्रविन्यस्य** प्रणवाख्यं ओङ्कारं शिवलिङ्गे विन्यस्य, **पट्टिकायां नकारकं** ऊर्ध्वपट्टिकायां नकारं विन्यसेत् इति शेषः ॥ २७ ॥

---

1. न्यस्तं–छ. ठ. ढ. द. ध.
   न्यस्य–प.
2. अकारादि–प.
3. मिति–प.
4. ओङ्कारं–प.
5. अकारकम्–त.

**मकारमूर्ध्वकञ्जे तु[1] शिकारं वृत्तमध्यके[2] ।**
**अधःकञ्जे च वाकारं[3] चाधःपट्ट्यां यकारकम्[4] ॥ २८ ॥**

[भुवनादिषडध्वन्यासविधिः]

**[5]एवं षडक्षरं[रः] प्रोक्तं[क्तः] षडध्वन्यास[6] उच्यते ।**

---

**मकारमूर्ध्वकञ्जे तु** ऊर्ध्वकञ्जे मकारं शिकारं **वृत्तमध्यके** वृत्तमध्ये शिकारम्, **अधःकञ्जे च वाकारं** अधःकञ्जे वाकारं च, विन्यस्य **अधःपट्ट्यां यकारकम्** अधःपट्ट्यां यकारं च विन्यसेत् । एवं चेत् 'ओं नमः शिवाय' इति षडक्षरमन्त्रन्यासो भवति । एतयोः पञ्चाक्षरषडक्षर-मन्त्रयोः वेदागमपुराणेषु प्रसिद्धत्वात् वीरशैवादिसर्वशैवानां दीक्षाकाल एव गुरुणा उपदिष्टत्वाच्च ग्रन्थविस्तरभयादत्र शुद्धाख्यग्रन्थे एतयोरुद्धारः परमेश्वरेण नोक्तः । एतदुद्धारश्च रहस्ये—

"धान्तं भान्तं च वान्तं च तृतीयस्वरभूषितम् ।
लान्तं पक्षस्वरोपेतं मान्तं पञ्चाक्षरं स्मृतम् ॥
हृदयं वपरं सूक्ष्मं लान्तोऽनन्तान्वितो मरुत् ।
पञ्चाक्षरो मनुः प्रोक्तः ताराद्योऽयं षडक्षरः ॥

इति ॥ २८ ॥

**एवं** उक्तप्रकारेण **षडक्षरः प्रोक्तः** षडक्षरमन्त्रन्यासः निरूपितः । **षडध्वन्यासः उच्यते** इदानीं भुवनादिषडध्वन्यासः अभिधीयते । **जगत्यां**

---

1. कञ्जं तु–थ.
2. मध्यमे–झ.
   मध्यगे–ग. च.
3. वकारं–ग. च.
4. मकारकं–छ.
5. पद्यार्धमिदं–क. छ. ज. ट. ढ. त. द. प. पुस्तकेषु न दृश्यते ।
6. न्यासं–घ. ठ. थ.

जगत्यां भुवनाध्वानं पदाध्वानं[1] च[2] पङ्कजे ॥ २९ ॥

[3]वर्णाध्वानं च वृत्ते तु कलाध्वानं च पङ्कजे ।

तत्त्वाध्वानं पट्टिकायां मन्त्राध्वानं प्रधारिके[4] ॥ ३० ॥

[एवं लिङ्गस्य मन्त्रमयत्वसिद्धिः]

एवं षडध्वनो[5]न्यस्य[6] सर्वमन्त्रात्मकं शिवम्[7] ।

सप्तकोटिमहामन्त्रैः मन्त्रितं लिङ्गमुच्यते ॥ ३१ ॥

---

**भुवनाध्वानं** पृथ्वीस्थानभूताधारस्थाने भुवनाध्वानं, **पङ्कजे पदाध्वानं** अधःकञ्जे पदाध्वानम्— ॥ २९ ॥

—**वृत्ते तु वर्णाध्वानं** वृत्ताभिधाने मणिपूरकस्थाने वर्णाध्वानम्, **पङ्कजे कलाध्वानं** ऊर्ध्वपङ्कजे कलाध्वानम्, **पट्टिकायां तत्त्वाध्वानं**— विशुद्धिस्थानभूतोर्ध्वपट्टिकायां तत्त्वाध्वानं **प्रधारिके मन्त्राध्वानं** आज्य-प्रधारिकायां मन्त्राध्वानं च न्यसेदिति शेषः ॥ ३० ॥

**एवं षडध्वनः न्यस्य** उक्तप्रकारेण भुवनादिषडध्वनः विन्यस्य, **सर्वमन्त्रात्मकं शिवं** शिवलिङ्गं समस्तमन्त्रस्वरूपम्, विदुरिति शेषः । **सप्तकोटिमहामन्त्रैः मन्त्रितं लिङ्गमुच्यते** इदं शिवलिङ्गं सप्तकोटिमहामन्त्रैः मन्त्रितमित्यभिधीयते ॥ ३१ ॥

---

1. षडाध्वानं–द.
2. तु–ध.
3. पद्यार्धमिदं–त. पुस्तके न दृश्यते ।
4. प्रसारिके–ग. च. झ.
5. षडध्वकं–क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध.
   षडक्षरं–प.
6. न्यस्त्वा–क. घ. छ. ट. ठ. ढ. त. थ. द.
   न्यस्येत्–झ.
7. त्मकं विदुः–प.

ज्ञात्वा समर्चयेन्मन्त्री[1] त्वन्यथा[2] निष्फलं भवेत् ।
कामिकादिषु तन्त्रेषु[3] ह्यष्टा[4]विंशतिभेदतः[5] ॥ ३२ ॥
प्रोक्तानि मन्त्रजातानि तत्सर्वं विन्यसेद्बुधः ।
तस्मात् सर्वप्रयत्नेन मन्त्रजातमिदं मतम् ॥ ३३ ॥

[एकोनविंशतिमन्त्राभिधानानि]

अतिबालं[6] सबालं च[7] कौमारं च त्रिकोणकम् ।

---

मन्त्री शिवमन्त्रज्ञः महात्मा, ज्ञात्वा शिवलिङ्गं सप्तकोटिमहामन्त्रस्वरूपमिति ज्ञात्वा अर्चयेत् पूजयेत् । अन्यथा निष्फलं भवेत् शिवलिङ्गस्य सप्तकोटिमहामन्त्रस्वरूपत्वमविज्ञाय पूजनं निष्फलं भवति । अष्टाविंशतिभेदतः अष्टाविंशतिसंख्यया भिन्नेषु कामिकादिषु तन्त्रेषु कामिकादिवातुलान्तेषु आगमेषु— ॥ ३२ ॥

— मन्त्रजातानि प्रोक्तानि यानि मन्त्रजातानि कथितानि तत् सर्वं तानि सर्वाण्यपि मन्त्रजातानि ज्ञात्वा बुधः आगमज्ञः विन्यसेत् शिवलिङ्गे न्यासं कुर्यात् । तस्मात् तस्मात्कारणात् सर्वप्रयत्नेन आगमोक्तसमस्तमन्त्रन्यासप्रयत्नेनापि इदं शिवलिङ्गं मन्त्रजातं मतं मन्त्रसमूहस्वरूपमिति सम्मतम् ॥ ३३ ॥

इदानीं मन्त्राणां अभिधानान्युच्यन्ते— अतिबालम्, सबालम्,

---

1. न्मन्त्रे–ग. च. ठ. त. ध.
2. अन्यथा–क. ख. घ. छ. ट. ठ. ढ. त. द. प.
   चान्यथा–ध.
3. मन्त्रेषु–च. त.
4. अष्टा–क. ख. घ. छ. ट. ठ. ढ. त. थ. द. प.
   चाष्टा–ध.
5. भेदकाः–ढ.
6. आदिबालं–क. घ छ. ट. ठ. ढ. त. थ. द. ध. प. फ.
7. स्वबालं च–फ.

यौवनं चैव जातीनां[1] प्रकृतिर्विकृतिस्तथा[2] ॥ ३४ ॥

ब्राह्मणः क्षत्रियो वैश्यः शूद्रजातिरनन्तरम्[3] ।

स्त्रीपुंनपुंसकं चैव[4] चलन[5]स्थानमासनम् ॥ ३५ ॥

शुद्धं मिश्रं च सङ्कीर्णं[6] मन्त्ररूपमथ[7] शृणु[8] ।

[9]एकोनविंशतिर्मन्त्राः तेषां लक्षणमुच्यते ॥ ३६ ॥

---

**कौमारम्, यौवनम्, प्रकृतिः, विकृतिः— ॥ ३४ ॥**

**ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्रः, स्त्री, पुमान्, नपुंसकम्, चलनम्, स्थानम्, आसनम्— ॥ ३५ ॥**

**—शुद्धम्, मिश्रम्, सङ्कीर्णम्,** इति मन्त्राभिधानं एकोनविंशतिसंख्याकं भवति । अथ अतिबालादीनां स्वरूपं अवधारय । इतः परं तेषां मन्त्राणां **लक्षणं उच्यते** ॥ ३६ ॥

---

1. सर्वेषां-च.
2. कृतिस्तु वा-ख. ग. च. ज. झ.
3. जातिः प्रकीर्तितः-क. घ. ट. ठ. थ. प.
   जातिः प्रकीर्तिता-ख.
   जातिः प्रकीर्तिताः-छ ढ. त. द. ध.
   जातिस्तथा पुनः-फ.
4. पुंसकेन्द्रादि-ज.
   पुंसकं जाति-क. घ. छ. ट. ठ. ढ. त. द. ध. प. फ.
5. शयनं-फ.
   शयन-ग. च.
6. मिश्रमसङ्कीर्णं-फ.
   मिश्रं तु सङ्कीर्णं-क. घ. छ. ज. ट. ठ. ढ. त. थ. द. ध.
7. मतः-क. घ. त. ध.
8. मिहोच्यते-फ.
9. पद्यार्धमिदं-क. ख. छ. ट. ढ. त. थ. द. पुस्तकेषु न दृश्यते ।

[तत्र अतिबालसबालयोः स्वरूपम्]

[1]शुद्धं चाकारसंयुक्तं अतिबालं[2] प्रकीर्तितम्[3] ।

---

शुद्धप्रासादमन्त्रः अकारसंयुक्तः अतिबालसंज्ञको भवति ।

---

1. " सर्वमीकारसंयुक्तं अतिबालं प्रकीर्तितम् ।
अष्टबीजसमायुक्तं सबालं चेति कीर्तितम् ॥
पञ्चस्वरसमायुक्तं कौमारं तु प्रकीर्तितम् ।
यौवनं चैव सर्वेषां मन्त्रजातं प्रकीर्तितम् ॥
शिवाक्षरं ब्राह्मणानां पञ्चाक्षरं नृपस्य तु ।
षडक्षरसमायुक्तं वैश्यादीनां प्रकीर्तितम् ॥
एवं क्रमेण गुणितं चतुर्थ्यन्तं प्रकीर्तितम् ।
स्वाहाकारो भवेन्नारी नमोऽन्तं पुरुषाकृतिः ॥
फट्कारं च वषट्कारं नपुंसकमिति स्मृतम् ।
विप्रः स्वाहान्तकं प्रोक्तं नृपवैश्यादिसंयुतम् ॥
शूद्राणां तु नमश्चैव मन्त्रजातं प्रकीर्तितम् ।
शुद्धमेकाक्षरं मन्त्रं वेदाक्षरं तु मिश्रकम् ॥
सङ्कीर्णं बहुधा मन्त्रं त्रिविधं मन्त्रमुच्यते ।
एवं नवदशं जातं मन्त्रजातमतः शृणु ॥
मन्त्रादौ शीर्षकं प्रोक्तं मन्त्रोर्ध्वं वदनं परम् ।
मन्त्रपार्श्वे तु बाहू च तस्याधः स्थानसंयुतम् ॥
चक्षुः पार्श्वे तु श्रोत्राणि चक्षुर्मध्ये तु नासिका ।
तस्या ऊर्ध्वे ललाटं च बिन्दुर्मस्तक उच्यते ॥
नादं जिह्वेयमाख्यातं शब्दं शब्दमिति स्मृतम् ।
ओष्ठं शब्देन भिन्नस्य आस्यान्तरसमन्वितम् ॥ "

इति अयं भागः–ग. च झ. पुस्तकेषु " पारुष्यमेव रूपं तु (४७) इति पद्यार्धानन्तरं " अकारं च " इत्यारभ्य " मन्त्रप्रकृतिरुच्यते " इत्यन्ताधिकपाठानन्तरं पुनरपि अधिकपाठतया दृश्यते । इत आरभ्य उपरितनपद्यानां अस्य अधिकपाठत्वात् अत्रैव अयं भागः पाठान्तरत्वेन प्रदर्शितः ॥

2. आदिबालं–क. घ. छ.

3. प्रकीर्तितः–प.
इति स्मृतम्–ग. च.

अष्टबीज[1]समायुक्तं सबालमिति[2] कीर्तितम् ॥ ३७ ॥

[कौमारयौवनयोः स्वरूपम्]

पञ्चाक्षर[3]समायुक्तं कौमारं तु प्रकीर्तितम्[4] ।
यौवनं चैव सर्वेषां मन्त्रजातं प्रकीर्तितम्[5] ॥ ३८ ॥

[ब्राह्मण-क्षत्रिय-वैश्य-शूद्रमन्त्राणां स्वरूपम्]

एकाक्षरं[रो] ब्राह्मणं[णः] स्यात् क्षत्रं पञ्चाक्षरं भवेत्[6] ।
षडक्षर[7]समायुक्तं[क्तः] वैश्यं[श्यः] शूद्रं[8][द्रः] प्रकीर्तितः[9] ॥३९॥

---

**अष्टबीजसमायुक्तो** मन्त्रः सबालसंज्ञको भवति ॥ ३७ ॥

**पञ्चाक्षरसहितो** मन्त्रः कौमारसंज्ञकः भवति । समस्तदेवता-मन्त्रजातं यौवनसंज्ञकं भवति ॥ ३८ ॥

**एकाक्षरो** मन्त्रः ब्राह्मणसंज्ञको भवति । **पञ्चाक्षरो** मन्त्रः क्षत्रसंज्ञकः । **षडक्षरो** मन्त्रः वैश्यसंज्ञकः शूद्रसंज्ञकश्च भवति ॥ ३९ ॥

---

1. अष्टबीजं–क. छ. ट. ठ. ढ. त. द.
2. सबालं चेति–क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
3. पञ्चस्वर–ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
4. कौमारं परिकीर्तितम्–च.
   कौमारं चेति कीर्तितम्–प.
5. इतः परं प्रकृतिविकृत्योर्लक्षणभागः मूले नोपलभ्यते ।
6. शिवाक्षरं ब्राह्मणो जातं पञ्चाक्षरं नृपस्य तु–क.
   शिवाक्षरं ब्रह्मणो जातं पञ्चाक्षरं नृपस्य तु–घ. छ. ट. ठ. ढ. त. थ. द. प.
   शिवार्णं ब्रह्मणो जातं पञ्चार्णं तु शिवस्य तु–ध.
7. षडक्षरं–क. थ.
8. वैश्यशूद्रं–क. ख. ग. छ. ट. ठ. ढ. त. द. प.
   वैश्यादीनां–ख. (पा).
   वैश्यशूद्रौ–ध.
9. प्रकीर्तितम्–क. ख. ग. घ. च. छ. ज. ट. ठ. ढ. त. द. ध. प.
   इति स्मृतम्–झ.

[1]एवं क्रमेण निर्णीतं[2] चतुर्थान्तं[3] प्रकीर्तितम् ।

[स्त्रीपुंमन्त्रस्वरूपम्]

स्वाहाकारो भवेन्नारी नमोऽन्तं पुरुषाकृति[4] ॥ ४० ॥

[नपुंसकमन्त्रस्वरूपम्]

फट्कारं च वषट्कारं नपुंसकमिति[5] स्मृतम् ।

[मन्त्रेषु विप्रादिलक्षणम्]

विप्रं[6] स्वाहान्तकं प्रोक्तं नृपवैश्यादिसंयुतम् ॥ ४१ ॥

[7]शूद्राणां तु नमश्चैव मन्त्रजातं प्रकीर्तितम्[8] ।

[स्थानस्वरूपम्]

इन्द्रादिशयनस्थानं मन्त्रजातं प्रकीर्तितम्[9] ॥ ४२ ॥

---

एवं ब्राह्मणक्षत्रियवैश्यशूद्रक्रमतः मन्त्रः चतुर्विधः भवति। यस्य मन्त्रस्य 'स्वाहा' इति पल्लवः अन्ते वर्तते स मन्त्रः स्त्रीमन्त्रः । यस्य मन्त्रस्यान्ते 'नमः' इति पल्लवः वर्तते, स पुरुषरूपः मन्त्रः भवति ॥ ४० ॥

यस्य मन्त्रस्यान्ते फट्कारः वषट्कारो वा वर्तते स मन्त्रो नपुंसकसंज्ञः भवति । स्वाहाऽन्तमन्त्रः नृपवैश्यशूद्रसंयुतः विप्रमन्त्रो भवति ॥ ४१ ॥

[नमोऽन्तमन्त्रजातं शूद्रमन्त्रो भवति ।]

मन्त्रजातं इन्द्रादिशयनस्थानं भवति ॥ ४२ ॥

---

1. पद्यार्धमिदं–झ. पुस्तके न दृश्यते ।
2. गुणितं–क. ख. ग. घ. च. छ. ज. ट. ठ. ढ. त. द. ध. प.
3. चतुर्थ्यन्तं–ग. च. ज. झ.
4. पुरुषाकृतिः–क. ख. घ. च. ज. झ. ट. ठ. ढ. त. थ. द. ध. प.
5. नपुंसक इति–ट.
6. विप्रे–ध.
7. पद्यार्धमिदं–क. ख. घ. छ. ज. ट. ठ. ढ. थ. द. ध. प. पुस्तकेषु न दृश्यते।
8. आसनं मन्त्रपीठकम्–ख. (पा). ग. च. झ.
9. चलन-आसनस्वरूपविवरणभागः मूले न लभ्यते ।

[शुद्धमिश्रसङ्कीर्णानां स्वरूपम्]

शुद्धमेकाक्षरं प्रोक्तं वेदवर्णाश्च मिश्रकाः [1] ।
सङ्कीर्णो [2] बहुवर्णश्च [3] त्रिविधो [4] मन्त्र [5] ईरितः [6] ॥ ४३ ॥

[मन्त्राणां पुरुषरूपत्ववर्णनम्]

मन्त्रादौ शीर्षकं [7] प्रोक्तं मन्त्रोर्ध्वे वदनं मतम् [8] ।
मन्त्रबाह्ये [9] तु बाहू च [10] तस्याप्यधरसंयुतम् [11] ॥ ४४ ॥

---

एकाक्षरो मन्त्रः शुद्धः । चतुरक्षरो मन्त्रः मिश्रः । बहुप्रकाराक्षरो मन्त्रः सङ्कीर्णः । एवं मन्त्रः त्रिप्रकारो भवति ॥ ४३ ॥

मन्त्रादिभागः शिरः भवति । मन्त्रस्योर्ध्वभागः वदनं स्यात् । मन्त्रस्य पार्श्वद्वयं बाहुद्वयं भवति । मन्त्रस्य बाहुद्वयं अधरोपेतं च भवति ॥ ४४ ॥

---

1. वेदाक्षरं तु मिश्रकम्–ख. घ. छ. ठ. त. ध.
   वेदाक्षरं तु मिश्रितम्–क. ट. ढ. द.
2. सङ्कीर्णं–क. घ. छ. ट. ढ. त. द. ध. प.
3. बहुधा मन्त्रः–ख.
   बहुधा मन्त्रम्–क. घ. छ. ज. ट. ढ. त. द.
   बहुधा मिश्रम्–ध.
4. त्रिविधं–क. घ. छ. ट. ढ. त. द. ध.
   त्रिभेदं–प.
5. मन्त्रं–क. घ. छ. ट. ठ. ढ. त. द. प.
6. उच्यते–क. ख. घ. छ. ट. ठ. ढ. त. द. ध. प.
7. शीर्षं–ढ. द.
8. वदनं भवेत्–ज.
9. मन्त्रपार्श्वे–क. ख. छ. ट. ठ. ढ. त. थ. द. ध.
10. बाहू तु–क. घ. छ. ट. ठ. ढ. त. थ. द.
11. प्याधारसंयुतम्–ग. च.
    प्यधःस्थानसंयुतम्–झ.

पार्श्वे तु चक्षुःश्रोत्राणि[1] चतुर्मध्ये[2] तु नासिका ।
तस्या ऊर्ध्वे[3] ललाटं च[4] बिन्दुर्मस्तकमुच्यते[5] ॥ ४५ ॥

नादो जिह्वा समाख्यातः[6] शब्दः शब्द इति स्मृतः[7] ।
ओष्ठः[8] शब्देन भिन्नः[9] स्यात् आस्यान्तर[10]समन्वितः[11] ॥४६॥

---

मन्त्रस्य उभयपार्श्वयोः चक्षुःश्रोत्राणि स्थितानि । तेषां चतुर्णां मध्ये नासिका भवति । नासिकाया उपरि ललाटं भवति । बिन्दुः मस्तकं भवति ॥ ४५ ॥

मन्त्रस्य नाद एव रसना । तदुच्चरितवर्णात्मकध्वनिरेव शब्दः । आस्यान्तर्वर्ती ओष्ठः शब्देन भिन्नो भवति ॥ ४६ ॥

---

1. श्रोत्रं च–ज.
2. चक्षुर्मध्ये–ग. च.
   तयोर्मध्ये–ज.
3. तस्याप्यूर्ध्वे–ज.
4. ललाटश्च–थ.
5. मस्तक उच्यते–ग. च. झ.
6. नादं जिह्वा समाख्यातः–क. छ. ज. ट. ड. ढ. त. थ. ध.
   नादं जिह्वा समाख्याता–ठ. द. प.
   नादं जिह्वेयमाख्यातं–ग. झ.
   नादजिह्वेयमाख्याता–च.
7. शब्दं शब्दमिति स्मृतम्–क. ग. घ. च. छ. ज. झ. ठ. ढ. त. थ. द. ध. प. शब्दशब्दमितीरितम्–थ.
8. ओष्ठं–क. ग. घ. च. छ. ज. झ. ढ. त. थ. द. ध. प.
9. भिन्नं–ग. घ. च. छ. ज. झ. ढ. त. थ. द. ध. प.
10. अस्याधार–ज.
11. समन्वितम्–क. ग. घ. च. छ. ज. झ. ट. ठ. ढ. त. थ. द. ध. प.

वाग्भवं मुखमित्याहुः ओष्ठान्तं कण्ठ एव च[1] ।
पौरुषं रूपमेवं[2] तु वासवाहनमुच्यते[3] ॥ ४७ ॥

[मन्त्राणां वासवाहने]

प्रणवान्तसमायुक्तं मन्त्रान्ते च प्रतिष्ठितम्[4] ।

---

**वाग्भवं** मन्त्रस्य वदनं भवति । **ओष्ठान्त**मभिव्याप्य वर्तमानः प्रदेशः **कण्ठः** । एवंविधं **रूपं पौरुषा**त्मकं भवति । इतः परं **मन्त्राणां वासवाहने** निरूप्येते ॥ ४७ ॥

**इदं** मन्त्रस्वरूपं **प्रणवा**ग्रमारभ्य **मन्त्रान्त**भूतपल्लवं चाभिव्याप्य

---

1. 'कण्ठ एव च' इत्यस्य स्थाने—
"शिवमेव च"–प.
"ग्रीवमेव च"–घ. छ. ज. ट. ठ. ढ. त. द. ध.
"श्रियमेव च"–फ.
2. पारुष्यरूपमेवं–ध. वर्जम् ।
पार्श्वे च रूपमेवं–ग. च.
पारुष्यमेव रूपं–झ. प.
3. एतदनन्तरं च–ग. च. झ. पुस्तकेषु—
"अकारं च इकारं च उकारं च ऋकारकम् ।
लृकारं चैव एकारं ओकारं च तथैव तु ॥
एते सप्तस्वरादीनि मन्त्रप्रकृतिरुच्यते ।
पद्यं चेदं–क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न दृश्यते ।
4. प्रणवोऽयमिति प्रोक्तं मन्त्रजातस्तु पृष्ठतः–फ.
प्रणवान्ते समायुक्तं मन्त्रान्ते च प्रतिष्ठितम्–ग. च.
प्रणधान्तसमायुक्तं मन्त्रान्ते च प्रतिष्ठितम्–ठ.
गणवान्तसमायुक्तं मन्त्रान्तं च प्रतिष्ठितम्–ट. थ. प.
प्रणवान्तसमायुक्तं मन्त्रान्तान्ते प्रतिष्ठितम्–क. छ. ट. ठ. द. ध.

[1]मन्त्ररूपमिदं प्रोक्तं मन्त्रवासस्तथोच्यते ॥ ४८ ॥

मन्त्राणां[2] प्रकृतिर्वासः वाहनं विकृतिस्तथा[3] ।
प्रकृतिर्वर्णभावश्च[4] वर्णानां[5] वासजिह्वया[6] ॥ ४९ ॥

---

वर्तते । एतावत्पर्यन्तं **मन्त्ररूपं** कथितम् । इतः परं **मन्त्रवासः** कथ्यते ॥ ४८ ॥

मन्त्रगतं प्रकृत्यक्षरं **मन्त्राणां** वासस्थानं भवति । मन्त्रगत**विकृत्यक्षरं** मन्त्राणां **वाहनम्** । मन्त्रवासभूतप्रकृतिरेव **वर्णः** । **वर्णानां** वर्णत्वं च स्ववासस्थानभूत**जिह्वया** सिद्ध्यति ॥ ४९ ॥

---

1. इदं पद्यार्धं–क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न दृश्यते ।

   एतदर्धानन्तरं–ग. च. झ. पुस्तकेषु 'प्रणवान्ते समायुक्तं मन्त्रान्ते च प्रतिष्ठितम्' इति अर्धं पुनरुक्ततया अधिकं दृश्यते ।

   एतदनन्तरं च तेष्वेव–ग. च. झ. पुस्तकेषु—

   " मन्त्ररूपमिति प्रोक्तं मन्त्रवासनमुच्यते ।
   मन्त्राणां विकृतिर्वासः वाहनं विकृतिः स्मृतम् ॥
   प्रकृतिर्वर्णभावश्च वर्णवासो रसज्ञकः ।
   तस्यां वरं च वासं चास्याणं वै बुद्धिवासनम् ॥ "

   इति, अग्रे " आस्यानां बुद्धिवासनम् " इत्यन्तस्य स्थाने दृश्यते ॥

2. मन्त्राणि–क.

3. स्ततः–ग. च. झ.

4. भावं च–क. ग. घ. च. छ. ज. झ. ट. ठ. ढ. त. थ. द.

   वासं च–ध.

5. वर्णार्णं–क. घ. ढ. त. द.

6. वर्णवासोरसकः–ख. (पा). झ.

आस्ये तु जिह्वावासश्च[1] आस्यानां बुद्धि[2]वासनम्।
बुद्धयर्णं हृदये वासम्[3] हृदयं पिण्डवासनम्[4] ॥ ५० ॥
पिण्डार्णं वासयेन्नाड्यां[5] नाडीनां वायुवासनम्[6]।
वायुवासश्च[7] शक्तीनां शक्तिवासंच[सश्च][8] वै शिवः ॥ ५१ ॥
शिववासंच[सश्च] सर्वेषां मन्त्रवासं[सः][9] प्रकीर्तितम्[तः][10];

---

आस्यं अक्षराश्रयभूतजिह्वायाः वासस्थानम्। बुद्धिः आस्यानां वासस्थानम्। हृदयं शब्दानुविद्धबुद्धयक्षरवासस्थानम्। पिण्डं बुद्धिव्यापारकारणभूतहृदयस्य वासस्थानम् ॥ ५० ॥

नाडी पिण्डाक्षरवासस्थानं भवति। वायुः नाडीनां वासस्थानम्। शक्तयः वायोः वासस्थानम्। शिवः शक्तीनां वासस्थानं भवति ॥ ५१ ॥

स शिवः सर्वेषां वासस्थानं भवति। एवं मन्त्रवासः निरूपितः।

---

1. जिह्वास्ये तु वासं च–ग. च.
2. बुद्ध–ग. च.
3. वासो–फ.
4. वासने–फ.
   वासकम्–ध.
5. पिण्डार्णं वासयेन्नाडी–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
   पिण्डात्तु वासयोर्नाडी–फ.
   पिण्डार्णं वासयेन्नाड्याः–ग. च. झ.
6. वायुरासनम्–फ.
   वायुवासकम्–ध.
7. वायुवासनं–प.
   वायुरासनं-फ.
8. शक्त्यावासं–क. ख. घ. छ. ढ. त. थ. द.
9. मन्त्रावासं-प.
10. उदीरितम्–फ.
    इदं प्रोक्तम्–क. ग. घ. च. छ. ज. झ. ट. ठ. ढ. त. थ. द. ध. प.

[शिवस्यैव सर्वावासत्वदृढीकरणम्]

नित्यो नैमित्तिकश्चैव परं चापरमेव च[1] ॥ ५२ ॥

सच्चासच्च सुरश्रेष्ठ! कर्तृ भर्तृ तथैव च ।
हृद्यं चैव तथाऽहृद्यं अद्य ह्यः श्वस्तथैव च ॥ ५३ ॥

वाच्यं च वाचकं यत्तत् आधाराधेयमेव च ।
सुस्थितं दुःस्थितं चैव चलं चाचलमेव च ॥ ५४ ॥

शीतमुष्णं च यत् प्रोक्तं सुखं दुःखं तथैव च ।
पवित्रं चापवित्रं च मृदुतीक्ष्णं तथैव च ॥ ५५ ॥

रागद्वेषं च यज्ज्ञानं यच्चालभ्यं तथैव च ।
उन्नतं चानतं चैव सम्पच्चासम्पदेव च ॥ ५६ ॥

---

इदानीं शिवस्यैव सर्वावासत्वं द्रढयति—**नित्य इति**। हे सुरश्रेष्ठ! नित्यः, नैमित्तिकः, परं अपरम्— ॥ ५२ ॥

—सत्, असत्, कर्तृ, भर्तृ, हृद्यं, अहृद्यं, अद्य, ह्यः, श्वः— ॥ ५३ ॥

—वाच्यं वाचकं आधारः आधेयः सुस्थितं दुस्थितं चलं अचलम्— ॥ ५४ ॥

—शीतं उष्णं सुखं दुःखं पवित्रं अपवित्रं मृदु तीक्ष्णम् —॥५५॥

—रागज्ञानं द्वेषज्ञानं अलभ्यं उन्नतं आनतं सम्पत् असम्पत्— ॥ ५६ ॥

---

1. इत आरभ्य "सदाशिवसमाश्रिता" इत्यन्तो भागः—क. ख. घ. छ. ज. ट. ठ. ढ. त. थ. द. प. फ. पुस्तकेषु न दृश्यते । किन्तु—ग. च. झ. पुस्तकेषु "आस्ये तु जिह्वावासश्च आख्यानां बुद्धिवासनम्" इति पद्यार्धानन्तरं दृश्यमानोऽप्ययं भागः विषयानुबन्धौचित्यवशात् अत्रैव योजितः ॥

सर्वमेतच्च देवेशः तस्मादन्यन्न विद्यते ।
प्रकृतिश्शब्दमात्रं तु रूपमात्रं तथा परम् ॥ ५७ ॥
रसमात्रं गन्धमात्रं श्रोत्रं त्वक् चक्षुरेव च ।
जिह्वा घ्राणं च वाक्पाणिपादं पायुरुपस्थकम् ॥ ५८ ॥
मनसा च पृथिव्यादिपञ्चकं पुरुषेण तु ।
राग[गो] माया च विद्यां[द्या] च कला नियमं[म] एव च ॥५९॥
विग्रहेशंच[शश्च] शक्तिंच[क्तिश्च] शुद्धमायां[या] तथैव च ।
शुद्धविद्या शुद्धकला सदाशिवः शिवं विदुः ॥ ६० ॥
ईश्वरं च[रश्च] स एव स्यात् स एवाहं भवांस्तथा ।
स एव देवब्रह्मादि[ः] कश्यं[श्य]पाद्यप्रजासृजाः[जः] ॥ ६१ ॥

---

—इत्येतत् सर्वं देवेशः शिव एव । एतस्माच्छिवादन्यत् किमपि नास्ति । मूलप्रकृतिः शब्दतन्मात्रं रूपतन्मात्रं स्पर्शतन्मात्रम्— ॥५७॥

—रसतन्मात्रं गन्धतन्मात्रं श्रोत्रेन्द्रियं त्वगिन्द्रियं चक्षुरिन्द्रियं जिह्वेन्द्रियं घ्राणेन्द्रियं वागिन्द्रियं पाणीन्द्रियं पादेन्द्रियं पाय्विन्द्रियं उपस्थेन्द्रियम्— ॥ ५८ ॥

—मनः पृथिव्यादिपञ्चभूतानि पुरुषः रागः माया विद्या कला नियतिः— ॥ ५९ ॥

—विग्रहेशः शक्तिः शुद्धमाया, शुद्धविद्या, शुद्धकला, सदाशिवः इत्येतत् सर्वं शिव एव ॥ ६० ॥

ईश्वरश्च शिवतत्त्वमेव । अहं भवांश्च शिवतत्त्वमेव । ब्रह्मादयः सर्वे देवाः कश्यपादयश्च सर्वे प्रजापतयश्च शिवतत्त्वमेव ॥ ६१ ॥

स एव मुनयः सप्त चन्द्रादित्यौ ग्रहेश्वरौ ।
स एव देवराजोऽपि कुबेरो वरुणस्तथा ॥ ६२ ॥

सयमोऽग्निश्च नागेशः निर्ऋतिर्वायुरेव च ।
ईशानो गणपाः सर्वे वसवोऽष्टौ तथैव च ॥ ६३ ॥

रुद्रा एकादशान्येऽपि देवदानवपुङ्गवाः ।
दैवमष्टविकल्पं च धैर्यमन्योन्यपञ्चकम् ॥ ६४ ॥

मानुष्यं च जगत् कृत्स्नं स एव शिव उच्यते ।

[शिवस्यैव सर्वविद्याप्रतिपाद्यत्वम्]

चत्वारश्च तथा वेदाः रहस्येन वदन्ति किम् ॥ ६५ ॥

सिद्धान्ते भूततन्त्रे च वामे स्रोतसि दक्षिणे ।
भैरवेषु तथाऽन्येषु पशुपाशुपतादिषु ॥ ६६ ॥

---

सप्तर्षयः ग्रहेश्वरो चन्द्रादित्यौ च शिवतत्त्वमेव । इन्द्रः कुबेरः वरुणः— ॥ ६२ ॥

—यमः, अग्निः, आदिशेषः, निर्ऋतिः, वायुः इत्येते सर्वेऽपि शिवतत्त्वमेव । ईशानः सर्वे गणेशाः अष्टौ वसवः— ॥ ६३ ॥

—तथैव एकादश रुद्राः देवदानवश्रेष्ठाश्च अष्टविधं दैवं पञ्चविधं धैर्यम्— ॥ ६४ ॥

—मनुष्यवर्गः समस्तं जगच्च शिवतत्त्वमेव । चत्वारो वेदाः उपनिषद्द्वारा यत् प्रतिपादयन्ति तच्च— ॥ ६५ ॥

—सिद्धान्तग्रन्थेषु भूततन्त्रेषु वाममार्गे दक्षिणमार्गे च भैरवतन्त्रेषु पशुपाशुपतादिग्रन्थेषु— ॥ ६६ ॥

विष्णुतन्त्रे च बौद्धे च तथा दिक्पतिदर्शने ।
अष्टादशपुराणेषु षडङ्गेषु परेषु च ॥ ६७॥

योगशास्त्रेषु सर्वेषु न्यायवैशेषिकादिषु ।
यैर्यैर्यद्यत्परिक्रम्य तत्सर्वं प्रोच्यते बुधैः ॥ ६८ ॥

तत्तत्स एव देवेशः शिवशास्त्रे सनातनः ।
आदिमध्यान्तनिर्मुक्तस्वभावविमलप्रभुः ॥ ६९ ॥

सर्वज्ञः परिपूर्णश्च शिवो ज्ञेयः शिवागमे ।
केवलाद्यनवच्छिन्नो[1] वामेनोदितगोचरः ॥
[वाङ्मनोऽतीतगोचरः] ॥ ७० ॥

---

—विष्णुतन्त्रेषु बौद्धग्रन्थेषु दिक्पतिदर्शनग्रन्थेषु अष्टादशपुराणग्रन्थेषु शिक्षादिवेदषडङ्गग्रन्थेषु इतरग्रन्थेषु च— ॥ ६७ ॥

—योगशास्त्रग्रन्थेषु सर्वेषु न्यायवैशेषिकादिग्रन्थेषु यैर्यैर्बुधैः पुनःपुनरालोच्य यद्यत् प्रोच्यते— ॥ ६८ ॥

—तत्सर्वं शिवशास्त्रेषु प्रोक्तं सनातनं शिवतत्त्वमेव प्रोक्तम् । शिवागमे प्रतिपाद्यमानः असौ शिवः आदिमध्यान्तशून्यः स्वतःशुद्धः स्वयंप्रभुः ॥ ६९ ॥

—सर्वज्ञः परिपूर्णश्च वर्तते । अपि च सः केवलाद्यनवच्छिन्नः वाङ्मनसयोः अगोचरः सन् अनुभवैकवेद्यः ॥ ७० ॥

---

1. देशकालानवच्छिन्नो—ग.

निष्कलोऽ[सकलो]निष्कलश्चापि सर्वगन्धर्ववदिक् सदा ।
[सर्वगः सर्ववित् सदा ।]

[तादृशशिवसाक्षात्कारयोग्यतावर्णनम्]

अन्तर्यागो हि तत्पूजा योगिनामेव सा भवेत् ॥ ७१ ॥

योगाभ्यासरतैः सद्भिः हृत्कुशेशयमध्यमे ।
यमाद्यष्टाङ्गयोगेन विमलीकृतमानसे ॥ ७२ ॥

पूज्यते नेतरैस्तस्य पूजां कर्तुं विशिष्यते ।
हित्वा तदर्चनां नान्यत्[1] शक्यो भवति देहिनाम् ॥ ७३ ॥

अन्तर्यागाधिकारोऽत्र क्वचित् कस्यापि जायते ।
बहिर्यागाधिकारोऽयं किञ्चिद्ज्ञानेन[2] जायते ॥ ७४ ॥

---

निष्कलः सकलनिष्कलः सकलश्च सर्वव्यापकः सर्वज्ञश्च भवति । तस्य शिवस्य पूजा अन्तर्यागरूपा । सा च योगिनामेव भवति ॥ ७१ ॥

योगाभ्यासनिरतैः सद्भिः यमनियमाद्यष्टाङ्गयोगेन निर्मलीकृतमानसे हृदयकमलमध्ये सः पूज्यते ॥ ७२ ॥

अन्तर्यागरूपेयं पूजा यमनियमाद्यष्टाङ्गयोगरहितैरितरैः कर्तुं न शक्यते । इमां अन्तर्यागरूपां पूजां विहाय देहिनां अन्यत् श्रेयस्साधनं नास्ति ॥ ७३ ॥

अन्तर्यागाख्यपूजाधिकारश्च क्वचित् कस्यापि जायते । न सर्वत्र सर्वेषाम् । बहिर्यागाख्यपूजाधिकारः तदुपयोगितत्त्वज्ञानेन भवति ॥ ७४ ॥

---

1. तदर्चनादन्यत्–ग. झ.

2. ज्ञानं च–ग. झ.

[तस्यैव सर्वदेवतामूलसदाशिवस्वरूपत्वम्]

इत्यवेत्य स देवेशः शिवः सर्वान्तरस्थितः ।
लोकानुग्राहको भूत्वा जन्तूनां भुक्तिमुक्तिदः ॥ ७५ ॥
पञ्चब्रह्मतनुः साक्षात् स शिवोऽभूत् सदाशिवः ।

[तस्मात् महेश्वर-जगद्गुरुब्रह्मणामुत्पत्तिः]

तस्मादीश्वर उत्पन्नः सर्वदेवादिरव्ययः ॥ ७६ ॥
ततो हि मत्तः सर्वज्ञः समुत्पन्नो जगद्गुरुः ।
तन्नाभिकमलोद्भूतो ह्यजो लोकपितामहः ॥ ७७ ॥

[तस्यैव मायाश्रयत्वम्]

अधिश्रिता भवेद्विद्या सैव मायेति कीर्तिता ।
मूलप्रकृतिरित्येषा साऽपि पञ्चसु भुक्तिषु[शक्तिषु] ॥ ७८ ॥
कार्यकारणभावेन स्थितः[ता] तस्य[स्याः] स्थितिं शृणु ।
तस्याः[तासां] मनोन्मनी देवी सदाशिवसमाश्रिता ॥ ७९ ॥

---

—इति ज्ञात्वा सर्वान्तर्यामी देवेशः सः परशिवः लोकानुजिघृक्षया सर्वप्राणिनां भुक्तिमुक्तिप्रदानाय— ॥ ७५ ॥

—पञ्चब्रह्मतनुः साक्षात् सदाशिवो भवति । सदाशिवात् सर्वेषां देवानां आदिभूतः अव्ययः महेश्वरः समुत्पन्नः ॥ ७६ ॥

तस्मात् मद्रूपात् महेश्वरात् सर्वज्ञः जगद्गुरुः समुत्पन्नः । विष्णोः नाभिकमलात् लोकपितामहो ब्रह्मा सञ्जातः ॥ ७७ ॥

विद्या शिवतत्त्वमधिश्रिता भवति, सा विद्यैव मायेति कीर्त्यते । इयं मायैव मूलप्रकृतिरित्युच्यते । एषा मूलप्रकृतिः पञ्चसु शक्तिषु— ॥ ७८ ॥

—कार्यकारणभावेन स्थिता । तस्याः विद्यारूपमूलप्रकृतेः स्थितिं कथयामि शृणु । तासां शक्तीनां मनोन्मन्याख्या शक्तिः सदाशिवं समाश्रिता भवति ॥ ७९ ॥

[मन्त्रवाहननिरूपणम्]

मन्त्रवासो मया प्रोक्तः मन्त्रवाहनमुच्यते ।
लिङ्गे च प्रतिमाकुम्भे वास्तौ वह्नौ च मूलके ॥ ८० ॥
अन्ये[न्य]कुम्भे च वास्ये च युक्तं मन्त्रस्य वाहनम् ।

[मन्त्रलक्षणप्रकरणनिगमनम्]

एवं नवदश प्रोक्तं मन्त्रजातस्य लक्षणम् ॥ ८१ ॥
मन्त्रजातमिदं प्रोक्तम् । मन्त्रकीलमथ शृणु ॥ ८२ ॥

इति श्रीवातुलतन्त्रे शुद्धाख्ये सहस्रग्रन्थ-
संहितायां मन्त्रजातं नाम
नवमः पटलः

- o—

---

एवंप्रकारेण मन्त्रवासः उक्तः । अथ मन्त्रवाहनं निरूप्यते । लिङ्गं, प्रतिमा, कुम्भः, वास्तु, अग्निः, मूलस्थानम्— ॥ ८० ॥

—दीक्षाप्रोक्षणकालस्थापितकलशः, वासयोग्यं वस्तु, इत्येतत् सर्वं मन्त्रयोग्यं वाहनं भवति ।

एवं मन्त्रजातस्य एकोनविंशतिस्वरूपाणि कथितानि ॥ ८१ ॥

हे षण्मुख! एवं मन्त्रजातं निरूपितम् । इतः परं मन्त्रकीलं शृणु ॥ ८२ ॥

इति श्रीवातुलशुद्धाख्यतन्त्रसहस्रग्रन्थ-
संहिताव्याख्यायां मन्त्रजातं नाम
नवमः पटलः

—o—

अथ मन्त्रकीलपटलः
दशमः

[पटलार्थसूचनपूर्वकं मङ्गलाचरणम्]

सकलभुवनभूतभावनाभ्यां
जननविनाशविहीनविग्रहाभ्याम् ।
नरवरयुवतीवपुर्धराभ्यां
सततमहं प्रणतोऽस्मि शङ्कराभ्याम्[1] ॥ १ ॥

[2]ज्ञात्वा त्रिंशदतीत[3]मेकमधिकं[4] शैवं महातत्त्वकं
तद्भेदं[5] बहुलीलया[6] च सहितं नानावतारान्वितम् ।

---

[कीलाकीलेषु मन्त्रेषु कीलान् उत्सृज्य मन्त्रवित् ।
नेत्रादिदेहपर्यन्तं अकीलात्मकमन्त्रकान् ॥ १ ॥
भुक्तिमुक्त्यादिसर्वार्थदायकान् सम्यगुच्चरन् ।
सामान्यादिषु शैवेषु वीरशैवे सुदीक्षितः ॥ २ ॥
लिङ्गप्राणाविनाभावात् अश्नुते यत् सुखं महत् ।
आविर्भवतु सर्वेषां भक्तानां तदहर्निशम् ॥ ३ ॥]

समस्तभुवनेषु विद्यमानानां सर्वेषां प्राणिनां रक्षकाभ्याम्, उत्पत्तिविनाशरहितशरीराभ्याम्, नरश्रेष्ठस्य श्रेष्ठयौवनयुक्तायाः नार्याश्च शरीरं धारयद्भ्याम्, पार्वतीपरमेश्वराभ्यां अहं सर्वदा प्रह्वीभूतोऽस्मि ॥ १ ॥

---

1. इदं मङ्गलपद्यं–ग. च. पुस्तकयोरेव दृश्यते ।
2. पद्यमिदं–घ. छ. ट. ठ. ढ. त. थ. द. ध प. पुस्तकेष्वेव दृश्यते ।
   ख. ज. झ. पुस्तकेषु इदं मङ्गलपद्यमेव न दृश्यते ।
3. दधिक–क. घ. छ. ट. त. थ. द. प.
4. ममितं–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
5. तस्येदं–ट. ढ. ध.
6. ब्रह्मलीलया–प.
   बहुकीलया–ट. ढ. थ.

सामान्यादिसमस्तशैवकुशलं[1] वीराख्यशैवं[2] महत्
संश्रित्यात्मनि दिव्यलिङ्गमनिशं ध्याये तदीले [डे]भजे[3] ॥२॥

[पटलारम्भप्रतिज्ञा, ग्राह्य-त्याज्यमन्त्रविभागश्च]

अथातः सम्प्रवक्ष्यामि मन्त्रकीलमथ[4] शृणु ।
अकीलं[5] कीलमित्युक्तं कीलमन्त्रं[6] विसर्जयेत् ॥ ३ ॥

---

दिव्यलिङ्गं शिवाद्येकत्रिंशत्स्वरूपात्मकम्, शिवसम्बन्धिमहातत्त्वात्मकम्, नानालीलास्वरूपम्, चन्द्रशेखराद्यनेकावतारसहितम्, सामान्यादिसमस्तशैवानामपि क्षेमङ्करम्, श्रेष्ठवीरशैवस्वरूपं चेति ज्ञात्वा, तत् स्वात्मनि धृत्वा, अहं अनारतं मनसा चिन्तयामि, वचसा स्तौमि, वपुषा सेवे च ॥ २ ॥

अथातः मन्त्रजातनिरूपणानन्तरम्, मन्त्रकीलं संप्रवक्ष्यामि निरूपयामि । अथ शृणु अवधारय । अकीलं कीलमिति मन्त्रजातं द्विधा उक्तम् प्रोक्तम् । कीलमन्त्रं तयोः कीलमन्त्रं विसर्जयेत् परित्यजेत् ॥ ३ ॥

---

1. शैवनिवहं–ग.
2. वीरं च शैवं–ग.
3. ध्यायन् तदीशं भजे–ग.
4. मतः–त. ध.
5. अखिलं–थ.
   अकिलं–घ. छ. ट. त.
   कीळकं–द.
   आकारं–ग. च.
6. कीलमन्त्रे–ध.
   खिलमन्त्रं–थ.
   कीलं मन्त्रं–ठ.

[मन्त्रोच्चारणविधिः]

[1] नेत्रे ललाटवक्षश्च [2] श्रोत्रे [3] चास्यं च नासिका [4] ।
पादौ [5] बाहू च देहश्च [6] मन्त्र [7] उच्चार्यते बुधैः ॥ ४ ॥

[मन्त्राणां अनुकूल-प्रतिकूलस्वरूपे]

अति [8] दीर्घायते वृत्तं अथ दीर्घाक्षवृत्य च [9] ।
अर्धचन्द्रसमाकारं नादं[द] आयान्त[10]नादवत् ॥ ५ ॥

---

अयं नेत्रमन्त्रः, अयं ललाटमन्त्रः, अयं वक्षोमन्त्रः, अयं श्रोत्रमन्त्रः, अयमास्यमन्त्रः, अयं नासिकामन्त्रः, अयं पादमन्त्रः, अयं हस्तमन्त्रः, अयं देहमन्त्रः इति विदित्वा मन्त्रज्ञैः मन्त्रः उच्चार्यते ॥ ४ ॥

मन्त्रवृत्तं सर्वदा क्रमशो दीर्घदीर्घं भवति । अयं मन्त्रदीर्घायः मन्त्रनेत्रमावृत्य अर्धचन्द्रसमाकारो भवति । अयं च ध्वनिरिवागच्छन् मन्त्रनादः साक्षात् नादस्वरूपो भवति ॥ ५ ॥

---

1. पद्यमिदं–छ. पुस्तके न दृश्यते ।
2. ललाटे चक्षुश्च–ग. च.
3. श्रोत्रं–ग. च.
4. चास्यं च नासिके–झ. ध.
   नासिकमास्यकम्–ग. च.
5. कण्ठं–ग. च.
6. देहेच–ग. च.
7. मन्त्रं–क. ग. घ. च. छ. ज. झ. ट. ठ. ढ. त. थ. द. ध. प.
8. अथ–क. ख. घ. ट. ढ. त. थ. द. ध. प.
9. दीर्घाश्च वृत्तकम्–ग. च.
   दीर्घाध्यवृत्तकम्–ख.
   दीर्घं च वृत्तकम्–थ.
   दीर्घाक्षवृत्त च–घ. छ. ट.
   अत्र "दीर्घाक्षवृत्य च"ति छन्दोनुरोधेन ।
10. आयान्ति–ख. झ.

[1]एवमादिः[दि] तु[2] मन्त्राणां सर्वदुःखविनाशनम्[3] ।
भुक्तिमुक्तिप्रदं चैव सर्वकामार्थसाधनम् ॥ ६ ॥

विपरीतो विपत्त्यै स्यात् मन्त्ररूपं प्रकीर्तितम्[4] ।

[भक्तिस्थानानि]

गुरौ लिङ्गेऽक्षमालायां मन्त्रे भस्मनि पञ्चसु ॥ ७ ॥

एतासु शिवमुद्रासु शिववद्भक्तिमाचरेत्[5] ।

[शिवे आत्मात्मीयसमर्पणविधिः]

आत्मीयान् विविधान् भोगान् स्त्रीपुत्रप्रमुखानपि ॥ ८ ॥

---

पूर्वोक्तरीत्या प्रतिपादितं मन्त्रस्वरूपं समस्तदुःखमोचनं **भुक्तिमुक्ति-प्रदायकं** समस्तकामितार्थसाधनं च भवति ॥ ६ ॥

एतद्विपरीताकारः मन्त्रः विनाशकृद्भवति । एवं मन्त्ररूपं निरूपितम् । इदानीं शिवभक्तिस्थानं निरूप्यते—शिवोपासको भक्तः **गुरौ शिवलिङ्गे अक्षमालायां** शिवमन्त्रे **भस्मनि**— ॥ ७ ॥

—इत्येतासु **पञ्चसु शिवमुद्रासु शिवे** इव **भक्तिमाचरेत्** । स्वकीयान् समस्तानपि भोग्यपदार्थान् पत्नीपुत्रादीनपि— ॥ ८ ॥

---

1. 'एवमादि तु' इत्यारभ्य 'स्यान्मन्त्ररूपं प्रकीर्तितम्' इत्यन्तो भागः–क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु न दृश्यते ।
2. एवमाकार–झ.
3. विनाशकृत्–थ.
   विमोचनम्–झ.
4. एतावत्पर्यन्तमेव–ज. पुस्तकपाठः ।
   ज. पुस्तके—अत्रैव च दशमपटलसमाप्तिरपि प्रदर्शिता ।
5. शिवभक्तिं समाचरेत्–ग. घ. झ
   शिवसद्भक्तिमाचरेत्–प.

स्वात्मानं चित्तबुद्धी च[1] तेषां च वशमानयेत् ।

[शिवद्रोहलक्षणम्]

यो भेदं भक्तिमान्[2] भक्तः[3] तेषु मोहात् करोति च[4] ॥ ९ ॥

शिवद्रोही स[5] विज्ञेयः सर्वकर्मबहिष्कृतः ।

[शैवभेदाः]

शैवं चतुर्विधं ज्ञेयं समासात् शृणु षण्मुख ॥ १० ॥

सामान्यं मिश्रकं चैव शुद्धं[6] वीरं[7] यथाक्रमम् ।

[तत्र प्रथम-सामान्यशैवलक्षणम्]

तत्रादौ सम्प्रवक्ष्यामि शैवसामान्यलक्षणम् ॥ ११ ॥

---

—स्वात्मानं, चित्तं, बुद्धिं च गुर्वादीनां अधीनतां नयेत् । अहं महाशिवभक्तोऽस्मीत्यभिमन्यमानो यः शिवभक्तः पूर्वोक्तगुरुशिवलिङ्गाक्षमाला-शिवमन्त्रभस्मसु अज्ञानात् भेदभावनां करोति— ॥ ९ ॥

—सः शिवद्रोहीति ज्ञातव्यः । सः सर्वशिवकार्यबहिष्कृतश्च भवति ॥

इदानीं शैवभेदो निरूप्यते—हे षण्मुख! इदं च शैवं चतुर्विधं भवति । तत् शैवस्वरूपं सङ्ग्रहेण शृणु ॥ १० ॥

शैवं—सामान्यशैवं मिश्रशैवं शुद्धशैवं वीरशैवं चेति चतुर्विधं भवति । तेषु क्रमेण प्रथमं सामान्यशैवलक्षणं वक्ष्यामि ॥ ११ ॥

---

1. स्वात्मानं च विशेषेण—क. ख. घ. छ. ट. ठ. ढ. त. थ. द. प.
   चित्तबुद्धी विशेषेण—ख.
2. शक्तिमान्—ग. च.
3. भक्ताः—ग. च.
4. मोहात्—प्रकुर्वते—क. घ. छ. झ. ट. ठ. ढ. त. थ. द. ध. प.
   मोहात् करोति सः—ग. च.
5. शिवद्रोहीति—ख. ग. घ. झ.
6. शुद्धः—थ.
7. वीरः—क. ट.

शिवलिङ्गं यदा[1] पश्येत् तदा[2] कुर्यात्[3] समर्चनम् ।
प्रदक्षिणं प्रणामं वा दर्शनं[4]वाऽत्र[5] कारयेत् ॥ १२ ॥
भस्मधारणमात्रेण[6] शुद्धो भवति सर्वदा ।
शिवकीर्तौ[7] तदालापे[8] प्रीतिमान् शिवभक्तके ॥ १३ ॥

---

यः स्वयम्भुलिङ्गं देवदानवमानवादिप्रतिष्ठितलिङ्गं वा यदा पश्यति स तदा तस्य शिवलिङ्गस्य पूजां कुर्यात् । तदशक्तौ प्रदक्षिणं, तदशक्तौ प्रणतिं, तदशक्तौ तद्दर्शनं वा कुर्यात् ॥ १२ ॥

सामान्यशैवः शिवार्चनादिकार्येष्वपि मन्त्रोच्चारणपूर्वकं विभूतिधारणमात्रेण सर्वदा शुद्धात्मा भवति । सः शिवकीर्तने शिवालापे शिवभक्तेष्वपि प्रीतियुतो भवेत् ॥ १३ ॥

---

1. यथा–ग. च. झ.
2. तथा–ग. च. झ.
   सदा–त.
3. कुर्याः–ट.
4. प्रदक्षिणं च प्रणतिर्दर्शनं–ध.
   प्रदक्षिणं वा प्रणतिं दर्शनं–क. ख. छ. ट. त. थ. प.
   प्रदक्षिणं वा प्रणतं दर्शनं–ठ. ढ. द.
   प्रदक्षिणं प्रणामं च दर्शनं–ग. च. झ.
5. चात्र–ग. च. झ.
6. मंत्रेण–ख. ग. च. झ. वर्जं अन्यत्र.
7. शिवकीर्ति–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
   शिवकीर्तिः–ग. च. झ.
8. तदालाभे–प.
   तथालापे–छ. थ.

एतेषां नियतिर्नास्ति यथालाभं[1] समाचरेत् ।

[द्वितीयमिश्रशैवलक्षणम्]

सामान्यलक्षणं प्रोक्तं वक्ष्ये मिश्रस्य लक्षणम् ॥ १४ ॥
शैवं च वैष्णवं शाक्तं कौमारं गाणपत्यकम् ।
सौरं चाखिलदैवत्यं पूजनं च समाचरेत् ॥ १५ ॥
एतेषूक्तेषु सर्वेषु[2] तत्तन्मन्त्रेषु मिश्रका[णा]त्[3] ।
समभक्ति[4]समायुक्तः[5] सर्वान् लिङ्गेन[6] भावयेत् ॥ १६ ॥

---

पूर्वोक्तेषु शिवार्चनादिषु नियमो नास्ति । प्राप्त्यनुसारेण शिवार्चनादिकं कुर्यात् । इत्थं सामान्यशैवलक्षणं निरूपितम् ।

इतः परं मिश्रशैवलक्षणं निरूप्यते ॥ १४ ॥

शैवपीठमध्यस्थापितशिवलिङ्गस्य तदावरणस्थविष्णुप्रतिमायाः तथैव तदावरणस्थशक्तिदेवतायाः, तथा तदावरणस्थषण्मुखस्य, तथैव तदावरणस्थविनायकस्य, तदावरणस्थादित्यस्य च पूजनं कुर्यात् । एवं शिवलिङ्गसमीपस्थविष्ण्वादिपञ्चदेवतापूजनं पञ्चपूजनमित्युच्यते । एतत्पञ्चदेवतापूजासाहित्येन ब्रह्मेन्द्राद्यखिलदेवतानां च पूजनं कुर्यात् ॥ १५ ॥

अत्रोक्तविष्ण्वादिपञ्चदेवतासु अनुक्तब्रह्मेन्द्रादिसमस्तदेवतासु तत्तद्देवता-

---

1. यथालब्धं–क. ख. ग. घ. च. छ. झ. ट. ठ. ड. त. थ. द. प.
2. शास्त्रेषु–ध.
3. मिश्रितान्–ग. च. झ.
   मिश्रिकान्–थ.
   मिश्रवान्–छ.
   मिश्रकान्–प.
4. सम्यक् भक्ति–ग. च. झ.
5. समायुक्ताः–ध.
   समायुक्तं–व. थ.
6. सर्वांलिङ्गेन–क.

[तृतीयशुद्धशैवलक्षणम्]

मिश्रशैवमिति[1] प्रोक्तं शुद्धशैवमथ[2] शृणु ।
शुद्धत्वं[3] शिवमुद्दिश्य[4] शिवाज्ञातं[5] हि शैवकम् ॥ १७ ॥
शुद्धशैवसमायोगात्[6] शुद्धशैव[7]मिति स्मृतम् ।

---

मन्त्रेषु च सर्ववर्णाधिदेवताकारणभूतशिवमन्त्राक्षरस्य **मिश्रणात्** शिवः सर्वदेवतामन्त्रस्थः परिपूर्णभावेन शिवलिङ्गे शिवलिङ्गार्चकविष्ण्वादिदेवतासु च समानभक्तियुक्तः सन् सर्वा देवताः शिवलिङ्गसहिता एव **भावयेत्** । ईदृशशिवभावनया सर्वदेवतापूजनमेव उत्तमं शिवपूजनम् । अन्यथा विष्ण्वादिपूजनं शिवपूजनं न भवति । शिवः सर्वदेवताऽन्तःस्थः इति क्रियमाणं विष्ण्वादिसर्वदेवतापूजनमेव मिश्रशैवं भवति ॥ १६ ॥

हे कुमार! एवं **मिश्रशैवं** निरूपितम् । इतः परं **शुद्धशैवं** निरूप्यते । अवधारय । इदानीं शुद्धशैवशब्दस्य निर्वचनमुच्यते— **शिवमुद्दिश्य** प्रवृत्तत्वात् शुद्धत्वं भवति । **शिवाज्ञातं शैवम्** ॥ १७ ॥

शुद्धस्य शैवस्य च सम्बन्धात् **शुद्धशैवमिति** निरुक्तं भवति ।

---

1. मिश्रं शैवमिदं–ध.
2. मतः–थ. ध.
3. शुद्धतत्त्वं–घ.
   शुद्धत्वात्–ग. च. झ.
4. शिवमुद्दिष्टात्–क. ख. घ. ट. ठ. त. थ. द.
   शिवमादिष्टात्–छ.
5. शिवाख्यातं–ध.
6. शैवशिवयोगात्–त.
7. शुद्धं शिव–ग. च. छ.

शिवेनोत्पद्यते शैवः[1] तस्माज्जातः शिवद्विजः[2] ॥ १८ ॥
कामिकादिषु तन्त्रेषु चाष्टा[3]विंशतिषु क्रमात् ।
वेदशास्त्रादि[4]विद्यासु[5] कृताभ्यासः शिवव्रती[6] ॥ १९ ॥
कर्षणादिप्रतिष्ठान्तं प्रतिष्ठाद्युत्सवान्तकम् ।
उत्सवात्प्रा[7]यश्चित्तान्तं ज्ञात्वा सर्वं समाचरेत् ॥ २० ॥

---

शिवाज्जातः शैवः । तस्माज्जातः शिवद्विजो भवति ॥ १८ ॥

कामिकादिवातुलान्तेषु अष्टाविंशतिषु तन्त्रेषु ऋगादिवेद-मन्वादि-धर्मशास्त्र-पुराणेतिहासादि विद्यासु च क्रमात् कृताध्ययनः शिवोपासकः— ॥ १९ ॥

—शिवाकर्षणादारभ्य शिवलिङ्गस्थापन-कलशस्थापन-शक्तिदेवता-स्थापन-परिवारदेवतादिस्थापनक्रियाः शिवलिङ्गप्रतिष्ठामारभ्य नित्योत्सव-शिवोत्सवान्तक्रियाः उत्सवादारभ्य प्रायश्चित्तान्ताः क्रियाश्च यथावद्विज्ञाय सर्वं क्रियाकलापं कुर्यात् ॥ २० ॥

---

1. शैवं–क. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
2. इतः परं–क. ख. ग. घ. च. झ. ट. ठ. ढ. त. थ. द. ध. प. पुस्तकेषु एवं अधिकः भागः दृश्यते—"वीरागमे :—
   शिवद्विजास्तु विप्रेन्द्र ! ह्यादिशैवाः प्रकीर्तिताः ।
   कौशिकः काश्यपश्चैव भारद्वाजोऽत्रिरेव च ।
   गौतमश्चेति पञ्चैते पञ्चवक्त्रेषु दीक्षिताः ।
   एषां ऋषीणां वंशेषु जातास्ते हि शिवद्विजाः ।
   पुनर्दीक्षां न चार्हन्ति कृता चेत् सा तु निष्फला ॥"
   इति ॥
3. अष्टा–क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
4. शास्त्रेषु–ट.
5. सर्वेषु–क. ख. घ. छ. झ. ट. ठ. त. थ. द. ध. प.
6. कृत्वाऽभ्यासं शिवं प्रति–ग. च. झ.
7. उत्सवादिप्रा–ग. च. झ.

[तस्य आत्मार्थपरार्थेतिद्विविधलिङ्गपूजाविधिः]

मन्त्रयन्त्र[1]क्रियामुद्रा[2]न्यास[3]वाहनकादिभिः[4] ।
उपचारैः बहुविधैः लिङ्गं सिंहासने यजेत्[5] ॥ २१ ॥

---

प्रासादप्रणवादिमन्त्रैः, प्रासादपञ्चाक्षर्यादियन्त्रक्रियाभिः, अस्त्रमुखादिमुद्राभिः, बीजादिन्यासैः, आवाहनसंस्थापनादिक्रियाभिः, गन्धमाल्याद्युपचारैश्च शिवलिङ्गं सिंहपीठे पूजयेत् ॥ २१ ॥

---

1. प्रासादादीन्येव यन्त्र(चक्र)पर्यायनामानि भवन्ति । तद्यथा—प्रासादयन्त्रम्, पञ्चाक्षरीयन्त्रम्, शिवयन्त्रम्, अघोरास्त्रयन्त्रम्, पाशुपतास्त्रयन्त्रम्, इत्यादीनि ।

2. सुप्रभेदे—अस्त्रमुद्रा वक्त्रमुद्रा महामुद्रा ततः परा ।
शोधन्याख्या महामुद्रा तथा संहृतिसंज्ञका ।
मुद्रा पञ्चमुखी चैव तथा सुरभिमुद्रिका ।
द्रव्यमुद्रा मुकुलिका, पद्ममुद्रा तथैव च ।
शशकर्णा तथा मुद्रा शक्तिमुद्रा तथैव च ।
बीजमुद्रेति विख्याता दर्शनीया विशेषतः ।
शान्ता चावाहनी चैव ततो मुद्रा मनोरमा ।
ध्वजमुद्रेति विख्याता दर्शनीया विशेषतः ।
लिङ्गमुद्रा च गायत्री कलकण्ठी तथैव च ।
शूलमुद्रा नमस्कारा द्वाविंशत्या प्रकीर्तिताः ॥

क्रियासारे—धेनुयोनिसरोजातविच्छोटाच्छादनाह्वयाः ।
उपसंहृतसंज्ञा चेत्येताः मुद्राः षडीरिताः ॥

3. बीजन्यासमन्त्रन्यासादयः ।

4. आवाहनं संस्थापनं संनिधानं संनिरोधश्चेति—आवाहनादीनि इति ।

5. एतदनन्तरम्—ग. पुस्तके—

क्रियासारे—प्रसादं प्रणवं हंसं व्योमव्यापि शिवाक्षरम् ।
अघोरं दक्षिणामूर्तिं मृत्युञ्जयमतः परम् ॥
श्रीरुद्रं च परमं च श्रीमत्पञ्चाक्षरं परम् ।
अघोरास्त्रं शिवास्त्रं च तथा पाशुपतास्त्रकम् ॥
द्वादशैते महामन्त्राः शिवमन्त्रोत्तमोत्तमाः ॥

एते द्वादशमहामन्त्राः, शिवागमोक्तशिवमन्त्राः, उमाशक्तिमन्त्राः, विघ्नेशादिलोकपालादिमन्त्राश्च इति विद्यते ।

आत्मार्थं च परार्थं च पूजा द्विविधमुच्यते ।
दत्ते च गुरुणा लिङ्गे स्थण्डिले स्वयमा[स्वस्य चा]त्मनि ॥२२॥
आत्मार्थमिद[1]माख्यातं परार्थं तु[2] ततः शृणु ।
ग्रामादौ स्थापिते लिङ्गे[3] यद्वा देवादिनिर्मिते ॥ २३ ॥
परार्थमिति विज्ञेयं[4] सर्वप्राणिहितावहम् ।
[5]शिवद्विजेन[6] कर्तव्या द्विधा पूजेति चोदिता ॥ २४ ॥

---

शुद्धशैवपूजा आत्मार्था परार्था चेति द्विप्रकारा भवति । आचार्येण प्रदत्ते शिवलिङ्गे स्थण्डिलोद्धृतशिवचक्रे शिवलिङ्गे वा स्वहृदये वा क्रियमाणा पूजा आत्मार्था ॥ २२ ॥

हे षण्मुख! आत्मार्थं पूजनमेवं निरूपितम् । इतः परं परार्थ-पूजनमवधारय । यतः कुतश्चित् कारणात् देवर्षिदानवमानवादिभिर्निर्माय ग्रामपुरसमुद्रतीरनदीतीरगिरिगुहान्तरादिषु प्रतिष्ठिते शिवलिङ्गे क्रियमाणं पूजनम्— ॥ २३ ॥

—परार्थपूजनमिति ज्ञातव्यम् । इदं च पूजनं सर्वेषां प्राणिन हितकरं भवति । एवं शिवद्विजेन क्रियमाणा द्विविधा शिवपूज स्वार्थपरार्थरूपेति निरूपिता भवति ॥ २४ ॥

---

1. मेव–ध.
2. परार्थस्य–थ.
   परार्थं च–ध.
3. लिङ्ग–छ.
4. हि ज्ञेयं–छ.
5. पद्यार्धमिदं–ठ. पुस्तके न दृश्यते ।
6. शुद्धशैवेन (आदिशैवेन) } ग. च.
   वीरशैवेन–झ.

[अनेन शिवावरणादन्यत्र देवतान्तरपूजानिषेधः]

अन्येषां स्वार्थयजनं[1] न कुर्यात्तु[2] परार्थकम् ।
मोहाल्लोभाच्च[3] कुर्वीत राज्ञो राष्ट्रस्य दुःस्थितिः ॥ २५ ॥
शिवा[4]वरणदेवांश्च सर्वान्[5] सम्पूजयेत् गुह[6]! ।
पृथक् स्थान[7]स्थिताः सर्वाः[8] नार्चयेत् अन्यदेवताः[9] ॥ २६ ॥

---

शिवद्विजः ब्रह्मादीतरदेवानां शिवावरणेभ्योऽन्यत्र पृथक्स्थानेषु आत्मार्थं परार्थं च पूजां न कुर्यात् । यदि शिवाधिक्याज्ञानात् कुटुम्ब-भरणनिमित्तद्रव्यलोभाद्वा शिवावरणेभ्योऽन्यत्र ब्रह्मादीतरदेवतापूजां कुर्यात् तदा राज्ञः राष्ट्रस्य च अनिष्टं भवति ॥ २५ ॥

हे सुब्रह्मण्य! परार्थपूजायां निरतः शिवद्विजः शिवावरणगतान् ब्रह्मविष्ण्वादिसर्वदेवान् शिवपरिवारभावनया सम्यक् पूजयेत् । परं तु शिवावरणेभ्यो बहिः प्रतिष्ठितब्रह्मविष्ण्वादिदेवान् न पूजयेत् ॥ २६ ॥

---

1. स्वात्मार्थाय-प.
2. न च कुर्यात्-छ.
3. मोहलोभाच्च-क. झ. घ. प.
4. शैवा-ग. च. झ.
5. महान्-झ.
6. येत् क्रमात्-ग. च. झ.
7. पृथ्विस्थान-ग. च. झ.
   पृथक्स्थाने-त. प.
8. स्थितान् सर्वान्-क. घ. ट. त. थ. द. ध. प.
9. देवताम्-थ.

मन्त्रपिण्डहृदम्भोजे वासमन्त्रस्य भावतः[1] ।
आवाहनात्[2] समायुक्ते[3] लिङ्गे[4] पूजादिकं[5] चरेत् ॥ २७ ॥
मन्त्रलिङ्गशरीरः स्यात्[6] स एव[7] परमः शिवः ।

[चतुर्थ-वीरशैवनिरूपणारम्भः]

शुद्धशैवमिदं[8] प्रोक्तं[9] वीरशैवमथ[10] शृणु ॥ २८ ॥

---

शिवमन्त्रपिण्डात्मके स्वहृत्कमले आवाहिते शिवलिङ्गे वर्णवास-मारभ्य शिववासपर्यन्तमन्त्रोक्तवासमन्त्रभावनया मानसिकपूजां कुर्यात् ॥ २७ ॥

तादृशहृत्कमलावाहितः पूजितश्च शिवः मन्त्रलिङ्गात्मकशरीरो भवति । **स एव परमः शिवः ।**

एवं शुद्धशैवस्वरूपं निरूपितम् । हे षण्मुख! इतः परं वीरशैवस्वरूपं अवधारय ॥ २८ ॥

---

1. वासमन्त्रस्वभावतः–ध.
   वासमन्त्रस्य भावनाः–ग. च.
2. अवाहेन–प.
3. समायोगे–ग. च. झ.
4. लिङ्गं–घ. ट. त.
5. पूजाधिक्यं-क.
   पूजाधिकं–प.
6. शरीरस्य–ग. च. झ.
   शरीरी स्यात्–ट. त.
7. स्वयमेव परः शिवः-छ.
8. मिति–क. ख. घ. छ. ट. ठ. ढ. त. थ. द. प.
9. प्रोक्तः–थ.
10. मतः–ध.
    ततः–क. ख. घ. ट. ठ. ढ. त. द.

[1]ज्ञानगम्यं रहस्यं च कैवल्यपदकारणम् ।
वीरशैवमिति ज्ञेयं एतल्लक्षण[2]मुच्यते ॥ २९ ॥

---

वीरशैवं अनुभवैकवेद्यं गोपनीयं कैवल्यपदप्रापकं चेति विज्ञेयम् । इदानीं वीरशैवस्वरूपं निरूप्यते ॥ २९ ॥

---

1. 'ज्ञानगम्यं' इत्यतः प्राक्–ग. च. झ. पुस्तकेषु—

"सर्वेषामपि शैवानां वीरशैवं महत्तरम् ।
सुलभं देवपूजायां सुलभं च क्रियास्वपि ॥"

इति श्लोको दृश्यते ।

अत्रैव वीरागमे—

"सर्वेषामपि शैवानां वीरशैवं महोत्तमम् ।
सुलभा देवि! पूजा च सुलभं च क्रियावहम् ॥
अल्पक्रियं बहुफलं वीरशैवं महेश्वरि!
अन्यशैवं तु तत्सर्वं फलमल्पं क्रिया बहु ॥
तस्मात् सर्वप्रयत्नेन वीरमाहेश्वरं शुभम् ॥"

इति कर्नाटकभाषाव्याख्यायां उद्धृतः पाठो दृश्यते ।

अत्रैव–ख. पुस्तके तु टिप्पण्यां—

"सर्वेषामपि शैवानां वीरशैवं महोत्तमम् ।
सुलभा देवपूजा च सुलभं च क्रियावहम् ॥"

इति दृश्यते ।

2. तेषां लक्षण–ग. च. झ.
यत्तल्लक्षण–क. घ. छ. ट. ढ. त.

[वीरशैवपदार्थः]

एक एवायमेतस्मिन्[1] सर्वस्मिन् जगतीति यः[2] ।
विशिष्ट ईर्यते[3] यस्मात् वीर इत्यभिधीयते ॥ ३० ॥
शिवेन सह सम्बन्धं[न्धः] शैवमित्यादृतं[तो] बुधैः[4] ।
[5]उभयोः सम्पुटीभावात् वीरशैवमिति स्मृतम् ॥ ३१ ॥
शिवार्थार्पितजीवत्वात् वीरतन्त्रसमुद्भवात्[6] ।
वीरशैवसमायोगात् वीरशैवमिति स्मृतम् ॥ ३२ ॥

---

एतस्मिन् सर्वस्मिन् जगति यस्मात् कारणात् एक एवायमिति विशिष्टगुणवान् उच्यते तस्मादयं वीरः इत्यभिधीयते ॥ ३० ॥

विज्ञाः शिवेन सह सम्बन्धः शैवमिति कथयन्ति । वीर-शैवशब्दयोः सम्बन्धात् वीरशैवमिति स्मर्यते ॥ ३१ ॥

पुनरपि वीरशैवत्वं सहेतुकमुपपाद्यते—शिवैकसमर्पितजीवत्वात् वीरागमदीक्षाविर्भूतत्वात् वीरशैवशब्दसम्बन्धाच्च वीरशैवमित्युच्यते ॥३२॥

---

1. एवमेकायने यस्मात्–ग. च. झ.
   एकमेवायते तस्मिन्–प.
   एवमेकायते यस्मात्–झ.
2. जगदीश्वरः–ग. च. झ.
3. विशिष्टं वीयते–ग. च. झ.
4. चैवमादृत्य तं बुधैः–ग. च. झ.
   यश्चैवमित्यादृतं बुधैः–ढ. त. द.
   यश्शैवमित्यादृतं बुधैः–थ.
   यच्छैवमित्यादृतं बुधैः–क. छ. ट. ठ. प.
5. इत आरभ्य "वीरतन्त्रसमुद्भवात्" इत्यन्तो भागः–ग. च. पुस्तकयोः न दृश्यते ।
6. शिवान्वितं जीवयित्वा वीरतन्त्रसमुद्भवाः–झ.
   शिवार्थार्पितवीरत्वात् वीरतन्त्रसमुद्भवात्–ढ. ध.

[वीरशैवस्य त्रिधा विभागः]

वीरमाहेश्वरं तन्त्रं[तत्त्वं] ज्ञातव्यं त्रिविधं[1] सुत[2]!
सामान्यं च विशेषं च निराभारं[3] क्रमात् भवेत् ॥ ३३ ॥

[तत्र सामान्यवीरशैवलक्षणम्]

तत्रादौ[4] सम्प्रवक्ष्यामि वीरसामान्यलक्षणम् ।
हस्तमस्तकसंयोगात् भूतिाङ्कस्य धारणात् ॥ ३४ ॥
[5] शिवदेहीति विज्ञेयः[6] सर्वपापैः प्रमुच्यते[7] ।
गुरुणा दत्तलिङ्गं[8] तु शिवमन्त्रेण धारयेत् ॥ ३५ ॥

---

हे षण्मुख! वीरमाहेश्वरतत्त्वं सामान्यवीरशैवं विशेषवीरशैवं निराभारवीरशैवमिति क्रमात् त्रिप्रकारं भवति ॥ ३३ ॥

तेषु प्रकारेषु प्रथमं सामान्यवीरशैवलक्षणं निरूप्यते—वीरमाहेश्वराभिधशिष्यस्य मस्तके वीरशैवाचार्यगुरुणा अनुग्रहपूर्वकं स्वहस्तप्रक्षेपात् "त्वं वीरशैवसाम्राज्यं परिपालय" इत्युक्तिपूर्वकं शिष्यस्य ललाटे गुरुणा भस्मधारणाच्च— ॥ ३४ ॥

—स शिष्यः शिवलिङ्गदेहीति ज्ञातव्यः। गुरुकरसञ्जातः वीरमाहेश्वरः सशिष्यः सर्वस्मादपि पापात् विमुक्तो भवति। सशिष्यश्च गुरुणा प्रदत्तं शिवलिङ्गं श्रीमत्पञ्चाक्षरीत्यभिधमन्त्रेण स्वदेहे धारयेत् ॥३५॥

---

1. त्रिविधं-ग. च. झ.
2. स्मृतः-ठ.
   स्मृतम्-क. ग. च. झ.
3. निराधारं-झ. ध.
4. तन्त्रादौ-प.
5. पद्यार्धमिदं-ठ. पुस्तके न दृश्यते ।
6. विज्ञेयं-क.
7. समुच्यते-छ.
8. दत्तलिङ्गे-छ.

[तस्य लिङ्गधारणस्थानानि]

मूर्ध्नि कण्ठे भुजे हस्ते हृत्स्थले नाभिमण्डले ।
एतेषामेकदेशे[1] तु धारयेत् शिवलिङ्गकम् ॥ ३६ ॥

[तस्य निष्ठाविशेषः]

एककालं द्विकालं वा[2] त्रिकालं वा समर्चयेत्[3] ।
गुरौ लिङ्गे सदा भक्तिं कारयेत् भसितव्रती[4] ॥ ३७ ॥

[विशेषवीरशैवलक्षणम्]

वीरसामान्यमाख्यातं विशेषं च ततः शृणु[5] ।
शिवकुम्भं समासाद्य स्थण्डिलादिषु[6] पूर्ववत् ॥ ३८ ॥

---

इदानीं शिवलिङ्गधारणस्थानानि निरूप्यन्ते—मस्तकः **कण्ठः भुजः हस्तः** हृदयं नाभ्यूर्ध्वप्रदेशः इत्येतेष्वन्यतमे स्थाने **शिवलिङ्गं धारयेत्** ॥ ३६ ॥

भस्मधारणव्रतनिष्ठः शिष्यः प्रातःकाले, प्रातःकालसायङ्कालद्वयेऽपि वा, प्रातर्मध्याह्नसायाह्नकालत्रितयेऽपि वा शिवलिङ्गं पूजयेत् ।

तथैव **गुरौ** शिवलि**ङ्गे** च अनिशं **भक्तिं** कुर्यात् ॥ ३७ ॥

हे षण्मुख! **सामान्यवीर**शैववर्तनमेवं निरूपितम् । इतः परं **विशेष**वीरशैवमवधारय । वीरशैवदीक्षाकृत् देशिकोत्तमः शुद्धशैवदीक्षा-विधानोक्तरीत्या **स्थण्डिलादि**शुद्धप्रदेशेषु स्थापितं **शिवक**लशमुपेत्य— ॥ ३८ ॥

---

1. मेकदेशं–क. घ. छ. ट. ठ. त. थ.
2. च–ग. च. झ.
3. समाचरेत्–ध.
4. भसिते व्रती-क. ख. घ. त. थ. द. प.
5. विशेषं शृणु षण्मुख!–ग. च. झ.
6. स्थण्डिलादीनि–प.

शिवकुम्भे[1] शिवं पूज्य[2] भक्तानन्नेन[3] तोषयेत् ।
शेषं दीक्षोक्तवत् कृत्वा मलपाशादिमोचनम्[4] ॥ ३९ ॥
गुरुः शिष्यं समालोक्य तत्त्वदेहं विचिन्तयेत् ।
शिवकुम्भस्थतोयेन[5] अ[त्व]भिषिञ्चेच्छिवाणुना ॥ ४० ॥
नादं बिन्दुं कलां चैव[6] तत्तत्स्थानेषु विन्यसेत् ।
षट्चक्रं च षडङ्गं च षडध्वानं षडानन! ॥ ४१ ॥

---

— शिवकलशे शिवं प्रपूज्य, ततः दीक्षोत्सवभागिनः चरलिङ्गभक्तान् सादरं अन्नेन सन्तर्पयेत् । पुनः अवशिष्टं दीक्षोत्सवकर्मजातं सर्वं समस्तमलपाशादिविमोचनं च वीरशैवदीक्षापटलेपूक्तरीत्या विधाय— ॥ ३९ ॥

—शिष्यं कृपयाऽवलोक्य 'अस्य शिवतत्त्वदेहः सम्पद्यताम्' इति विचिन्तयेत् । ततः शिवकुम्भस्थपवित्रतोयमादाय श्रीमत्पञ्चाक्षरीमन्त्रोच्चारणपूर्वकं शिष्यस्योत्तमाङ्गे दूर्वाङ्कुरेण प्रोक्षणं कुर्यात् ॥ ४० ॥

नादाख्यशिवं बिन्द्वाख्यशक्तिं कलाख्यशिवावयवांश्च ध्यायन्, स्थानादिक्रियाचरणपूर्वकं पीठस्थापितशिवलिङ्गस्थलस्य शलाकापीठिकावयवभूततत्तत्स्थानेषु विन्यसेत् । हे षण्मुख! मूलाधारादिषट्चक्राणि, शिवाङ्गादिषडङ्गानि, भुवनाध्वादिषडध्वनश्च— ॥ ४१ ॥

---

1. शिवकुम्भं–ध.
2. पूज्यं–क.
3. नन्येन–घ. छ. त. द. ध. प.
4. पाशाविमोचनम्–ध.
5. कुम्भसुतोयेन–प.
6. नादबिन्दुकलादीनि–ग. च. झ.
नादबिन्दुकला नीत्वा–ख. छ. ट. ठ. ढ.
नादबिन्दुकलान्वितम्–क. ब.

तत्तत्स्थानेषु विन्यस्य पञ्च ब्रह्म न्यसेत्ततः ।
मूलमन्त्रं तूपदिशेत्[1] ततो लिङ्गं प्रदापयेत् ॥ ४२ ॥
शेषाणि सर्वकर्माणि दीक्षाऽध्वोक्तक्रमाच्चरेत्[2] ।
देहप्राणं[3] समायोज्य प्राण[4]लिङ्गे[5] प्रकल्पयेत् ॥ ४३ ॥
अविनाभावसंयोगात् तस्मादैक्यं प्रकल्पयेत् ।
अन्यदृष्टिनिपातं यत् तद् द्रव्यं[6] परिवर्जयेत् । ४४ ॥

---

—पूर्वोक्तशिवलिङ्गावयवेषु विन्यस्य, ततः सद्योजातादिपञ्चब्रह्म-मन्त्रान् न्यसेत् । शिव-सदाशिव-महेश्वरतत्त्वेषु शिवतत्त्वस्य प्राथम्यात् मूलतत्त्वात्मकतदीयशिवनाम्न एव चतुर्थ्यन्तस्य नमोऽन्तस्य च "शिवाय नमः" इति मूलमन्त्रत्वात् तस्यैव पञ्चाक्षरमन्त्रतया तन्मन्त्रस्यैव वीरशैवोपदेशार्हत्वम् । तन्मन्त्रोपदेशानन्तरं शिष्याय प्राणलिङ्गं प्रदद्यात् ॥ ४२ ॥

अवशिष्टसर्वकर्माणि वीरशैवदीक्षामार्गोक्तरीत्या समाचरेत् । वीरशैवदीक्षावान् वीरमाहेश्वरः देहप्राणम् अविनाभावेन संयोज्य प्राणलिङ्गे भावयेत् ॥ ४३ ॥

तस्मात् कारणात् प्राणलिङ्गैक्यं अविनाभावेन विभावयेत् । परावलोकितं वस्तु सर्वं परित्यजेत् । तत्सर्वं शिवलिङ्गाय नार्पयेत् ॥ ४४ ॥

---

1. मूलमन्त्रं समुपदिशेत्–क. घ. छ. ट. ठ. ड. त. द. प.
2. विध्युक्तक्रममाचरेत्–ग. च. झ.
3. देहे प्राणं–ग. च. झ.
   देहं प्राणे–ध.
   देहप्राणौ–ख.
4. प्राणं–ग. च. झ.
5. लिङ्गं–थ.
6. अन्यदृष्टिनिपातनं तद्द्रव्यं–घ.

शुद्धद्रव्यं समासाद्य[1] लिङ्गानां च[2] समर्पणम्[3] ।
इति व्रतसमायुक्तः वीरशैवो विशिष्यते ॥ ४५ ॥

[निराभारवीरशैवलक्षणम्]

विशेषशैवमाख्यातं निराभारं[4] ततः शृणु ।
सर्वसंसार[5]सौख्यानि त्यक्त्वा चित्तं[6] शिवेऽर्पयेत्[7] ॥ ४६ ॥

दण्डकौपीनकाषायजटावल्कलधारकः[8] ।
मुण्डी वा शिवचिह्नानि धारयेदजिनादिकम् ॥ ४७ ॥

---

इतरानिरीक्षितशुद्धद्रव्यं सम्पाद्य लिङ्गेभ्यः समर्पयेत् । एतादृशव्रतसमायुक्तः वीरशैवः विशेषवीरशैवो भवति ॥ ४५ ॥

हे षण्मुख! एतावत्पर्यन्तं विशेषवीरशैवात्मकभक्तस्थलं सङ्ग्रहेण निरूप्य, इतः परं निराभारवीरशैवात्मकजङ्गमस्थलं निरूप्यते— निराभारवीरशैवः सर्वाणि सांसारिकसुखानि विहाय सांसारिकसर्वविषयसुखेभ्यो विरक्तं चित्तं शिवलिङ्गे लयं प्रापयेत् ॥ ४६ ॥

स एव वीरशैवः दण्डं कौपीनं काषायाम्बरं जटां वल्कलं च धारयन् मुण्डी वा भूत्वा भस्मरुद्राक्षादीनि शिवचिह्नानि कृष्णाजिनव्याघ्राजिनादीनि च धारयेत् ॥ ४७ ॥

---

1. समापद्य-थ. प.
   समापाद्य-क. त. द.
2. लिङ्गाङ्गानां-क. च. छ. ट. त. थ. द. प.
3. प्रसर्पणम्-क. ख. घ. ट. ठ. ढ. त. द. प.
4. निराधारं-ग. च. झ.
5. संहार-ग. च. झ.
6. लिङ्गं-थ.
7. शिवे लयेत्-क. ख. घ. छ. ट. ठ. ढ. त. थ. द. ध. प.
8. धारकाः-द.

भिक्षाशी नियताहारः सुखसंसारवर्जितः ।
निराभारीति[1] विज्ञयः[2] स एव परमः शिवः[3] ॥ ४८ ॥

[वीरशैवानां सर्वेषामपि सामान्यविधयः]

वीरमाहेश्वराणां च सामान्य[4]व्रतमुच्यते[5] ।
पूर्वोक्तशिवमुद्रासु तद्धारिषु[6] च सर्वतः ॥ ४९ ॥
अर्थतः प्राणतः प्राज्ञः भक्तिं कुर्यात् दृढां[7] सुत !
पापं तेषु न वक्तव्यं स्वयमेव कदाचन ॥ ५० ॥

---

सः भिक्षान्नभोजी नियमिताहारः अल्पसुखदायकसंसारवर्जितः जङ्गमः निराभारिवीरशैवो भवति । स च साक्षात् परशिव एव ॥ ४८ ॥

इदानीं पूर्वोक्तवीरमाहेश्वराणां सामान्यव्रतमुच्यते । पूर्वोक्तासु शिवमुद्रासु तादृशमुद्राधारिषु इन्द्रादिषु सर्वेषु च— ॥ ४९ ॥

हे सुत ! प्राज्ञः वीरमाहेश्वरभक्तः अर्थैः प्राणैश्च अविच्छिन्नभक्तिं कुर्यात् । शिवसम्बद्धेषु च स्वयं कदाऽपि पापवचनानि न ब्रूयात् ॥ ५० ॥

---

1. निराधारेति–ध.
   निराभारइ–क. ख. घ. त. वर्जम् अन्यत्र ।
   निराभारेति–छ. ट. द.
   निराहारेति–ग. च. झ.
2. विज्ञेयः–ग. च. झ. वर्जं अन्यत्र ।
3. स्थूलवृत्तोत्तमः शिवः–ग. छ. झ.
4. सामान्यं–त.
5. माचरेत्–ठ.
6. तदादिषु–ध.
   तत्त्वादिषु–ग. च. झ.
7. दृढं–ग. च. झ.

कृते परेण चेत् पापे[1] नोपेक्षेत्[2] करणैस्त्रिभिः ।
बलवान् रक्षयेत् तत्र दुर्बलश्चेत् व्रजेत् ततः ॥ ५१ ॥

करणैस्तु[3] विहीनश्चेत् बुद्धिं तत्र न निक्षिपेत्[4] ।
स्वीकरोति यदा[5] लिङ्गं गुरुणा दीक्षयाऽणुना ॥ ५२ ॥

तदाप्रभृति[6] लिङ्गैक्यं अविनाभावयोगतः ।
देहं प्राणेन संस्थाप्य[7] प्राणं लिङ्गेन निक्षिपेत् ॥ ५३ ॥

---

इतरैः शिवधर्मविषये पापे कृते मनसा वाचा कायेन च तेषां उपेक्षां न कुर्यात् । अत्र उपेक्षेदिति परस्मैपदप्रयोगः छन्दोऽनुरोधेन । शिवभक्तः बलवांश्चेत् तान् पापाचारिणः दण्डयित्वा वीरशैवधर्मं परिपालयेत् । यदि शिवभक्तो दुर्बलः तदा तस्मात् प्रदेशात् निर्गच्छेत् ॥ ५१ ॥

वाङ्मनःकायैः दुर्बलश्चेत् स शिवभक्तः तेषु पापाचारिषु तदीयपापाचरणेषु च मनो न प्रवेशयेत् । यः शिवभक्तः गुरुणा दत्तं शिवलिङ्गं यदा दीक्षाविधानेन पञ्चाक्षरमन्त्रोच्चारणपूर्वकं स्वप्राणस्वरूपबुद्ध्या गृह्णाति— ॥ ५२ ॥

—तदाप्रभृति प्राणलिङ्गयोरविनाभावेन अभिन्नभावं जानीयात् । देहं प्राणात्मना सम्भाव्य तं च प्राणं लिङ्गात्मना भावयेत् ॥ ५३ ॥

---

1. पापं–ध.
2. नेक्षेत–ग. च. झ.
3. करणैश्च–ध.
4. तत्र विनिक्षिपेत्–ग. च. झ.
5. यथा–ढ. द. प.
6. तथाप्रभृति–द.
7. संस्थाप्यं–क.

**प्राणेन नि[1]क्षिपेल्लिङ्गं पृथग्भावं न कारयेत् ।**
**वीरशैवक्रमः[2] प्रोक्तः[3] प्रायश्चित्तविवर्जितः ॥ ५४ ॥**

[वीरशैवनिष्ठाः]

**प्राणलिङ्गी[4] व्रते लुप्ते हस्तखड्गादवञ्चयन् ।**
**मुखं[5] पङ्कजवत् छिन्द्यात्[6] वीर[7]भृत्यस्य लक्षणम् ॥ ५५ ॥**

---

पुनः **लिङ्गं** व्यतिहारेण पूर्वोक्तप्राणात्मना सम्भावयेत् । इत्थं च देहप्राणलिङ्गानां अन्योन्यभेदभावनां न कुर्यात् । एवं **प्रायश्चित्तरहितः वीरशैवक्रमो** निरूपितः ॥ ५४ ॥

स्कान्दे—

"गुरुणा दत्तलिङ्गं तु सावधानेन धारयेत् ।
प्रमादात् पतिते लिङ्गे प्राणानपि परित्यजेत् ॥
पतिते प्राणलिङ्गे यः प्राणान् धत्ते नराधमः ।
स चण्डाल इति ज्ञेयः शिवद्रोही न तं स्पृशेत् ॥ "

इति ॥

अथ वीरमाहेश्वरव्रतनिष्ठां निरूपयति—

**प्राणलिङ्गी** स्वकीयव्रते नष्टे स्वहस्तस्थितखड्गेन अवञ्चयन् स्वमुखं पद्मवत् छिन्द्यात् । एतत् वीरमाहेश्वरभृत्यस्य लक्षणम् ॥ ५५ ॥

---

1. प्रणवेन–प.
2. क्रमं–छ. ठ.
3. प्रोक्तं–छ.
4. प्राणलिङ्गे–ख. त. ध. प.
   प्राणलिङ्ग–घ. छ. ट. ढ. थ. द.
5. मुख–ग. च. झ.
6. छेद्यो–क.
7. जीव–प.

योऽ वा चोत्पाटयेज्जिह्वां शिवनिन्दारतस्य तु[1] ।
त्रिःसप्त[2]कुलमुद्धृत्य रुद्रलोकं[3] स गच्छति ॥ ५६ ॥
शिवनिन्दाकर्तृशिक्षा प्रायश्चित्तविवर्जि[ता]तः[4] ।

[शुद्धशैवविशेषधर्माः]

शुद्धशैवो विशेषेण मन्त्रयन्त्रप्रचारणात् ॥ ५७ ॥
शुद्धो भवति लोपेषु[5] प्रायश्चित्तविधानतः ।
[6]स्वेष्टलिङ्गे परिभ्रष्टे नष्टे दग्धे हृतेऽपि वा ॥ ५८ ॥
नीते वा मूषिकाद्यैश्च काककौलेयवानरैः ।
जप्त्वा लक्षमघोरस्य विधिना[7] लिङ्गकान्तरम् ॥ ५९ ॥

---

यो वा वीरमाहेश्वरः शिवनिन्दातत्परस्य जिह्वां उपाटयेत्, सः शिवभक्तिविशेषेण एकविंशतिकुलान्युध्दृत्य रुद्रलोकं प्रयाति ॥ ५६ ॥

वीरमाहेश्वरकृतं शिवनिन्दातत्परस्य दण्डनम्, प्रायश्चित्तविमुक्तं भवति । शुद्धशैवस्तु लिङ्गपतनादिशैवव्रतलोपे अघोरादिमन्त्राणां यन्त्राणां च विशेषप्रयोगेण— ॥ ५७ ॥

—तत्तल्लोपानुगुणप्रायश्चित्ताचरणेन च पूतो भवति । सः स्वेष्टलिङ्गे पतिते नष्टे दग्धे चोरैरपहृते वा— ॥ ५८ ॥

—मूषिकः श्येनः काकः शुनकः वानरः इत्यादिभिर्नीते वा अघोरमन्त्रं लक्षसङ्ख्याकं जप्त्वा आचार्यमुखेन शास्त्रोक्तविधानेन लिङ्गान्तरं— ॥ ५९ ॥

---

1. निन्दाकरस्य तु–ग. च. झ.
2. त्रिसप्त–ग. च. झ.
3. शिवलोकं–छ.
4. पद्यार्धमिदं–क. पुस्तके न दृश्यते ।
5. लोकेषु–ग. च. झ.
6. 'स्वेष्टलिङ्गे' इत्यारभ्य "पिण्डिकायां तथैव च" इत्यन्तो भागः–ग. ग. च. झ. पुस्तकेषु न दृश्यते ।
7. विधानात्–ख.

प्रतिष्ठाप्य नयेत् शुद्धिं[1] पिण्डिकायां[2] तथैव च ।

व्रतस्य च[3] क्रियालोपे नियमस्य विलोपने ॥ ६० ॥

गायत्र्यष्ट[4]शतेनैव विशुद्धिमधिगच्छति ।

[ग्रन्थार्थनिगमनम्]

सामान्यं मिश्रकं चैव शुद्धं वीरं चतुर्विधम्[5] ॥ ६१ ॥

तत्सर्वं हि समासेन तव प्रोक्तं षडानन!

तत्त्वादिकीलकान्तानां[6] पटलानां दश क्रमात् ॥ ६२ ॥

---

—प्रतिष्ठाप्य संशोध्य पूजयेत् । पिण्डिकायामपि उक्तरीत्यैव समाचरेत् । शैवव्रतक्रियालोपे शैवव्रतनियमलोपे च— ॥ ६० ॥

अष्टोत्तरशतसङ्ख्याकगायत्रीमन्त्रजपेनैव शैवव्रतं विशुद्धं भवति । सामान्यशैवं मिश्रशैवं शुद्धशैवं वीरशैवमिति शैवं चतुर्विधं भवति ॥६१॥

हे षडानन! तत् चतुर्विधमपि तच्छैवं सङ्ग्रहेण तवाभिहितम् । एवं तत्त्वभेदपटलमारभ्य मन्त्रकीलपटलान्तैः दशभिः पटलैः क्रमेण तत्त्वभेदादिकं निरूपितम् ॥ ६२ ॥

---

1. नयेल्लिङ्गं–थ.
2. पीठिकायां–ख. ग. छ. ट. ढ. थ. द. प.
   खण्डिकायां–त.
3. व्रतस्य तु–ग. च. झ.
4. गायत्र्याष्ट–ग. च. झ.
5. यथाक्रमम्–थ.
6. तत्त्वादिकेवलान्तानां–ध.
   तत्त्वादिकीलकान्तश्च–क. घ. छ. ठ. ठ. ढ. थ.

एवं[1] शुद्धाख्यतन्त्रं तु[2] कथितं[3] तव सुव्रत!
भुक्तिमुक्तिप्रदं नृणां सर्वकामार्थसाधनम्[4] ॥ ६३ ॥

इति श्रीवातुलतन्त्रे शुद्धाख्ये सहस्रग्रन्थसंहितायां
मन्त्रकीलो नाम दशमः पटलः
तन्त्रं च समाप्तम्[5]

—o—

---

हे सुव्रत! कुमार! उक्तक्रमेण मानवानां भुक्तिदायकं मुक्तिदायकं समस्तेष्टार्थदायकं चेदं शुद्धाख्यं वातुलतन्त्रं ते प्रोक्तम् ॥ ६३ ॥

इति वातुलशुद्धाख्यतन्त्र-सहस्रग्रन्थसंहिताव्याख्यायां
मन्त्रकीलो नाम दशमः पटलः
समाप्तोऽयं ग्रन्थः

—o—

॥ शिवार्पणमस्तु ॥

---

1. भेदे–क. घ. छ. ट. ढ.
   भेदाः–ख.
   शैवं–झ. ध.
   शुभे–थ.
   भेदो–त.
2. तन्त्रस्य–क. ख. घ. छ. झ. ठ. ढ. त. थ. थ. प.
3. कथितः–क. घ. छ. ट. ठ. थ. ध.
   कथिताः–ख.
4. पद्यार्धमिदं–क. ख. घ. छ. झ. ट. ठ. ढ. त. थ. ध. प. पुस्तकेषु न न दृश्यते।
5. ग्रन्थसमाप्तिवाक्यानन्तरम्–ट. ध. पुस्तकयोः—
   "ये सर्वशैवाधिकवीरशैवाः
   परं विधिज्ञानसुवीरमार्गे।
   प्रवर्तयन्त्यव्ययभक्तियोगां[गं]
   तेभ्यो नमो विश्वपवित्रकृद्भ्यः ॥ १ ॥

यथा मन्त्रं समुत्तार्यं न त्यजेत् देहमन्दिरे ।
यथा मन्त्रं च लिङ्गं च मेलनं प्राणलिङ्गिनाम् ॥ २ ॥

इति दृश्यते ॥

–छ. पुस्तके—

दशभिः पटलानां समुत्पद्व्ययभक्तियोगात् (?) ।
तेभ्यो नमो विश्वपवित्रकृद्भ्यः ॥

इति दृश्यते ॥

–क. ट. पुस्तकयोस्तु—

(कर्णाटभाषाव्याख्यानस्यान्तिमे भागे—)

श्रीदशभिः पटलानां संयुतं शुद्धाख्यतन्त्रकम् ।
कर्णाटभाषाविवृतं सम्पूर्णं शैववल्लभम् ॥

नमस्ते बद्दवाख्यायामरगुण्डादिदेशिकः ।
तन्त्रवेत्तृ सतां नेत्रे षट्स्थलब्रह्मरूपिणे ॥

यः सर्वशैवाधिकवीरशैवं
परं विधित्वा समवीरमार्गे ।
प्रवर्तयन्त्यव्ययभक्तियोगाः
तेभ्यो नमो विश्वपवित्रकृद्भ्यः ॥

॥ शान्तसोमेश्वराय नमः ॥ वातुलतन्त्रं समाप्तम् ॥
॥ मङ्गलमहाश्रीश्रीश्रीश्रीश्रीश्रीश्रीश्री ॥

[आदित्यवारद पञ्चमियल्लि 8 तासिनलि
वातुलतन्त्र मुगियितु ॥]

—इति दृश्यते ॥

—o—

॥ श्रीरस्तु ॥

श्रीवातुलशुद्धागमे-

## सर्वप्रायश्चित्तपटलः

—o—

प्रायश्चित्तविधिं वक्ष्ये सर्वसम्पत्करं नृणाम् ।
प्रायो विनाश इत्युक्तः सन्धानं चित्तमेव वा ॥ १ ॥

क्रूरसान्त्वनकं चैव प्रायश्चित्तमिति स्मृतम् ।
मन्दिरे चलिते भिन्ने पतिते नाशिते भवेत् ॥ २ ॥

तद्राष्ट्रनाशनं कृत्वा नृपस्य मरणं ध्रुवम् ।
बालहर्म्यं ततः कृत्वा स्थापयेद्विधिपूर्वकम् ॥ ३ ॥

पूर्ववद्भवनं कृत्वा सम्प्रोक्षणमथाचरेत् ।
लिङ्गे आधारपादैश्च [दे च] नद्यावर्तस्थलेऽपि च ॥ ४ ॥

शुद्धद्वारस्य द्वारे तु चालनैर्न तु कारयेत् ।
तद्राष्ट्रनाशनं प्रोक्तं नृपतिस्त्वन्यथा भवेत् ॥ ५ ॥

बालहर्म्यं ततः कृत्वा जपेत् पाशुपतं शतम् ।
सम्प्रोक्षणं ततः कृत्वा जपेत् पाशुपतं शतम् ॥ ६ ॥

भवने हीने कर्तव्यं लिङ्गपीठविहीनके ।
लिङ्गपीठविहीने च यामहीनं न कारयेत् ॥ ७ ॥

तत्तद्धीनं तु संयोज्य जिह्महीनं न दोषभाक् ।
हर्म्यस्य चलितस्य स्यात् सुष्ठु हर्म्यं समाचरेत् ॥ ८ ॥

बालहर्म्यक्रमं कृत्वा पूजायोग्यं तु कारयेत् ।
पुनर्भवनकं कृत्वा सर्वालङ्कारसंयुतम् ॥ ९ ॥

मसूरादिस्थूपिपर्यन्तं वर्णं प्रति विशेषतः ।
अलक्षणं च जीर्णं च लक्षणोक्तक्रमेण तु ।। १० ।।

एतद्वर्गेण देवानां बाललिङ्गं तु योजयेत् ।
प्रार्थयेत्तु नमस्कृत्वा त्रिपक्षे च त्रिमासके ।। ११ ।।

अब्दे तृतीये कर्तव्यं विज्ञापयेत्तु सन्निधौ ।
अधिष्ठानस्य वर्गे तु जीर्णिते सम्भवे यदि ।। १२ ।।

एकादिसप्तपर्यन्ताङ्गुलानां गुलिकं क्रमात् ।
न्यूने तज्जीर्णिते चैव तस्य वर्गं न दोषभाक् ।। १३ ।।

तदूर्ध्वे हीनकर्तव्यं पुनस्सन्धानमाचरेत् ।
पादवर्गे त्र्यङ्गुलं तु जीर्णिते स्पन्दितेऽपि वा ।। १४ ।।

तद्वर्गं संहितं कृत्वा तदूर्ध्वं न च कारयेत् ।
प्रस्तरस्य गले वर्गे त्र्यङ्गुलस्य विहीनके ।। १५ ।।

तद्वर्गं संहितं कृत्वा तद्वर्गं न विकारयेत् ।
पुनस्सन्धानकं कृत्वा शिखरं तु तत्त्र्यङ्गुलम् ।। १६ ।।

स्फुटिते खण्डिते भिन्ने दोषयुक्तं न दोषभाक् ।
स्थूपिवर्गस्य चाङ्गुल्यं द्व्यङ्गुलं तु विहीनके ।। १७ ।।

दोषाश्रयं न कर्तव्यं ऊर्ध्वे सन्धानमाचरेत् ।
हीनाधिक्यं तु यद्वर्गे राजा राष्ट्रं विनश्यति ।। १८ ।।

तद्दोषशमनार्थाय स्नपनं शान्तिहोमकम् ।
प्रसादमुख्यैश्च जपेत् मन्त्रं पाशुपतं शतम् ।। १९ ।।

स्थूपिप्रधानमूलस्य चलिते चक्रभिन्नके ।
पिप्पलकोटकैश्चैव पुरापातोऽर्थहीनके ।। २० ।।

राजराष्ट्रस्य शोकं च श्वभ्रं त्यक्त्वा तु संभवेत् ।
एवमन्यं परिग्राह्य लक्षणोक्तक्रमेण तु ॥ २१ ॥

पत्मं[द्मं] कर्णस्य कुम्भे तु पालिका[यां] च कुध्म[ट्म]लम् ।
षडङ्गसंहितं [कृत्वा] सन्ध्या[न्धा]नेन तु [स]माचरेत् ॥ २२ ॥

सम्प्रोक्षणं ततः कृत्वा शान्तिहोमं शतं जपेत् ।
तद्वर्गस्फुटिते भिन्ने नाशिते चैव हीनके ॥ २३ ॥

तद् [ग्राम]वासिनः सर्वे रोगशोकभयापहम् ।
पुनः सन्धानकं कृत्वा स्नपनं चैव होमकम् ॥ २४ ॥

शिखामन्त्रं सहस्रं च जपेत् पाशुपतं शतम् ।
शिखराकृतिभिः ष . . . . मथापि वा ॥ २५ ॥

ग्रामश्रीस्त्वन्यथा कृत्वा धामश्रीस्त्वन्यथा भवेत् ।
. . . . . . . . . कुम्भाभिषेचनम् ॥ २६ ॥

कर्णे च प्रस्तरपादे अधिष्ठ . . . . वर्गके ।
. . . . ने पद्मविच्छेदे . . . . ॥ २७ ॥

. . . . . . . . . . ङ्गुष्ठनासिकम् ।
बलदण्डस्य विच्छेदे माबावोधिकवापालिते (?) ॥ २८ ॥

कम्पे च . . . . . हीने सस्यनाशं न संशयः ।
पुनःसन्धानकं कृत्वा शान्तिहोमं तु कारयेत् ॥ २९ ॥

. . चौ शिखरौ देवान् जीर्णोद्धारक्रमं कुरु ।
भवने[दे]व . . दग्धे च वह्नीनां तु भयं भवेत् ॥ ३० ॥

व्यपोह्याङ्गार[कार]कान् सर्वान् पश्चात् सन्धानमाचरेत् ।
शान्तिहोमं ततः कृत्वा पुण्याहं वाचयेत् ततः ॥ ३१ ॥

लिङ्गे च प्रतिमे[1] चैव वह्निना दग्धसम्भवेत्[2] ।
ज्वरव्याधिनिपीठं[डं] च लोकस्य भयमावहेत् ॥ ३२ ॥

क्षीरे धाराभिषेकं तु जलधाराभिषेचनम् ।
सम्प्रोक्षणं ततः कृत्वा शान्तिहोमं समाचरेत् ॥ ३३ ॥

अग्निदग्धे च यद्बिम्बं तद्बिम्बे दूषिते सति ।
नृपस्य मरणं घोरं उष्णरोगेण सम्भवेत् ॥ ३४ ॥

बिम्ब[म]न्यन्नवं ग्राह्यं पूर्वोक्तैर्लक्षणैर्युतम् ।
सम्प्रोक्षणं ततः कृत्वा शान्तिहोमं तु कारयेत् ॥ ३५ ॥

अग्निना स्फुटिते छिन्ने प्रत्यङ्गोपाङ्गहीनके ।
माषमात्रत्रि[त्र]यं चैव तिलमात्रतिलं तथा ॥ ३६ ॥

इदं व[तु]दृष्टवत् कृत्वा पूजाकार्यं न दोषभाक् ।
सद्येन शान्तिकुम्भं तु कृष्णलोहनमाचरेत् ॥ ३७ ॥

अथवा लोहजे बिम्बे पूर्ववत् परिकल्पयेत् ।
लोहजानां तु बिम्बानां विशेषं किञ्चिदस्ति भीः ॥ ३८ ॥

कर्णोदरशिरोवक्षोबाहुको[कू]र्परपाणयः ।
कटिजङ्घे महाङ्गानि जीर्णैश्चैव तु कारयेत् ॥ ३९ ॥

राजराष्ट्रस्य नाशं च भूपतिस्त्वन्यथा भवेत् ।
जीर्णबेरं तु योजित्वा[3] तद्देवं कुम्भमारभेत्[4] ॥ ४० ॥

---

1. प्रतिमायाम्–
2. दग्धसम्भवे–
3. योजयित्वा–
4. आरभेत–

तद्दृष्ट्या तत्प्रमाणेन तद्बिम्बं पूर्ववद्भवेत् ।
सम्प्रोक्षणं ततः कृत्वा प्रतिष्ठां कारयेत् ततः ॥ ४१ ॥

अङ्गहीने तु यत्प्राप्ते क्षुद्भयं ग्रामवासिनाम् ।
नेत्रं च नासिका चोष्ठं तालुं[लु] चैव तु कारयेत् ॥ ४२ ॥

कर्णं चाङ्गुलिमङ्गानि पुनः सन्धानमाचरेत् ।
सम्प्रोक्षणं ततः कृत्वा तिथिवारं विना चरेत् ॥ ४३ ॥

अथवासनानि [1] यत्कर्म सद्यः सर्वं समाचरेत् ।
केसरो नखभूषाश्च जटामालेन्दुशेखरम् ॥ ४४ ॥

शिरसे [2] भूषणे ये[चै] तत्प्रस्सां[त्यं]गं च विहीनके ।
तद्ग्रामनृपति[ते]र्गेहे शोकदुःखभयावहम् ॥ ४५ ॥

पूर्वं सन्धानयेत् [कं] कृत्वा सम्प्रोक्षणमथाचरेत् ।
पादुकावाहनस्रग्विलेपनं नरवाहनम् ॥ ४६ ॥

नखवेडमरुभ . . मकुटं भूषणौ बेरे [3] ।
शङ्खचक्रशिरश्चक्रं हरिणं टङ्कशूलकम् ॥ ४७ ॥

अक्षमालाग्निकं चैव पाशपद्मायुधान्यपि ।
पीठं प्रभावच्छत्रा च [4] प्रत्यङ्गं च विहीनके ॥ ४८ ॥

राजा [ज्ञि]वाहनहीने तु चतुरङ्गविहीनके ।
शेषाण्यलङ्कृतानां च नाशनं भवति ध्रुवम् ॥ ४९ ॥

---

1. अधिवासनानि–
2. शिरसि–
3. भूषणाम्बरे–
4. पीठं प्रभावलिं छत्रम्–

पुनःसन्धानकं कृत्वा [सं]प्रोक्षणमथाचरेत् ।
यानकालेऽन्यकाले वा प्रतिमापतिते भुवि ॥ ५० ॥

नृपस्य मरणं शीघ्रं दुर्भिक्षं जायते भुवि ।
स्नपनं शान्तिहोमं च जपेत् पाशुपतं शतम् ॥ ५१ ॥

पुनर्यानक्रमेणैव पूर्वोक्तेनैवमाचरेत् ।
परिवारविहीने च दासीदासविनाशनम् ॥ ५२ ॥

स्थापयेत् पूर्ववत् पश्चात् कृत्वा तु स्थापनोक्तवत् ।
परिवाराङ्गवैकल्ये पुनःसन्धानमाचरेत् ॥ ५३ ॥

तत्तन्मन्त्रेण संयुक्तं समिद्भिः सर्पिसर्षपात् [न्] ।
चरुणा जुहुयाद्धीमान् प्रत्येकं तु शतं क्रमात् ॥ ५४ ॥

सम्प्रोक्ष्याभ्यर्च्य गन्धाद्यैः पुण्याहं वाचयेत्ततः ।
आस्थानमण्डपा[पे] हीने भूषणालङ्कृ[तौ]तिस्तथा ॥ ५५ ॥

परिवेषविहीने च त[नृ]पो दुर्जयमाप्नुयात् ।
स्नपनं च ततः कृत्वा पुनः सन्धानमाचरेत् ॥ ५६ ॥

सिंहासनं च पर्यङ्कं शिबिकाबाधहीनके ।
स्तम्भभूषणहीने च वितानध्वजहीनके ॥ ५७ ॥

मुक्तास्रक्पुष्पमालानां मङ्गलाङ्कुरहीनके ।
सस्यानां नाशनं प्रोक्तं गवानां नाशनं भवेत् ॥ ५८ ॥

तन्मन्त्रेण शतं जप्त्वा पुनर्भूषणमाचरेत् ।
नृत्तवाद्यं च कालेषु कलहं यत्र सम्भवेत् ॥ ५९ ॥

तद्ग्रामवासिनः सर्वे ग्रहपीडाभयावहाः ।
तन्मूलैश्च शतं जप्त्वा जपेत् पाशुपतं शतम् ॥ ६० ॥

तत्काले चाग्निदग्धे च स्थाप्यमण्डपमादिशेत् ।
तरङ्गैश्च वितानैश्च स्तम्भभूषणवह्निना ॥ ६१ ॥

शिबिकामासनाद्यादि अग्निदग्धे तमावहेत् ।
ग्रामश्रीस्त्वन्यथा चैव ग्रामश्रीस्त्वन्यथा भवेत् ॥ ६२ ॥

प्रतिमामन्यतः स्थास्य[प्य] शीघ्रगं छिन्नकेतनम् ।
व्यपोह्याङ्गारकान् कृत्वा भूषयेत् भूषणार्हकम् ॥ ६३ ॥

गोमयालेपनं कृत्वा पिष्टचूर्णैरलङ्कृतम् ।
पुण्याहं पञ्चगव्यैश्च प्रोक्षयेत्तु शिवाम्भसा ॥ ६४ ॥

स्नापनं कारयेद्धीमान् शान्तिहोमं तु कारयेत् ।
पुनर्विज्ञाप्य देवेशं विशेषस्थानमण्डपे ॥ ६५ ॥

भुवने [1] शयनस्थानहीने राष्ट्रभयङ्करम् ।
भोगपूजाविहीने च राजजन्म विनश्यति ॥ ६६ ॥

पुनःसन्धानकं कृत्वा मण्डपं पूजयेत्ततः ।
पर्यङ्कमुपधानं च ऊर्ध्वाधश्छा[श्शा]यनाय च ॥ ६७ ॥

कृत्वा युक्तं वितानेन तरङ्गैश्च विहीनके ।
तद्ग्रामवासिनः सर्वे रोगादिपीडनार्तिकम् ॥ ६८ ॥

शिवमन्त्रं शतं जप्त्वा एतद्द्रव्यैश्च न्यूनकम् ।
कृत्वा तु अस्त्रमन्त्रेण प्रोक्षयेत्तु शिवाम्भसा ॥ ६९ ॥

चोरैर्वा अग्निदग्धैर्वा ग्राह्ये तद्भूषणार्हकम् ।
तद्ग्रामनाशनं [2] हन्ति सस्यानां नाशनं भवेत् ॥ ७० ॥

---

1. भवने–
2. तद्ग्रामवासिनः–

स्थानशुद्धिं ततः कृत्वा मण्डपाराधनं कुरु ।
शय्यागृहे तु संयोज्य पादुकां खड्गमेव च ॥ ७१ ॥

पादुकाराधने हीने शिबिकाद्यादिहीनके ।
तन्मन्त्रेण शतं जप्त्वा पुण्याहं पञ्चगव्यकैः ॥ ७२ ॥

नृत्तगीतादिवाद्ये च हीने स्थानबलक्षयम् ।
तद्दोषशमनार्थाय शान्तिकुम्भाभिषेपयेत्[1] ॥ ७३ ॥

भक्तादिस्तोत्रहीने च सा च भक्तिर्विनश्यति ।
तद्दोषशमनार्थाय शान्तिकुम्भाभिषेचयेत्[2] ॥ ७४ ॥

स्वस्तिसूक्तं च खड्गं च खेटकायुधमित्यपि ।
छत्रचामरकालां चै[3] हीने राष्ट्रभयावहम् ॥ ७५ ॥

तन्मन्त्रेण शतं जप्त्वा जपेत् पाशुपतं शतम् ।
आवाहनार्घ्यपाद्यादि[दौ]पुष्पास्रग्दामादिषु[4] ॥ ७६ ॥

ताम्बूलापूपनैवेद्यं [द्ये]पानीयं[ये]मुखवासकम् [के] ।
कर्पूरवर्तितद्दीपं[पे] हीने धूपादिहीनके ॥ ७७ ॥

जायानां नाशनं चैव बालानां नाशनं भवेत् ।
तत्तद्द्रव्येण संयोज्य तन्मन्त्रेण शतं जपेत् ॥ ७८ ॥

शयनाह्वानसांनिध्ये सुप्ते वा यदि सम्भवेत् ।
चोरैर्वाऽप्यग्निदग्धैर्वा राज्ञः शोकभयावहम् ॥ ७९ ॥

---

1. शान्तिकुम्भाभिषेचनम् ।
2. शान्तिकुम्भाभिषेचनम् ।
3. तालांश्च–
4. पुष्पस्रङ्मणिदामसु ।

सम्प्रोक्षणं ततः कृत्वा तत्तद्देवान् सुपूजयेत् ।
मूलेन देवं देवीश्च स्नपनं शान्तिहोमकम् ॥ ८० ॥

तन्मन्त्रेण शतं जप्त्वा जये[पे]त् पाशुपतं शतम् ।
सुरामांसं च पिष्टादीन् श्वानगर्दभकुक्कुटैः ॥ ८१ ॥

सूकरैर्वानरैश्चैव प्रतिलोमरजस्वलैः ।
नरपक्षिमृते जाते तिर्यग्जाते मृते तथा ॥ ८२ ॥

गर्भगेहे प्रवेशं[शे] च स्पृष्टे लिङ्गे च कौतुकम् [के] ।
नृपवाहनहीने च तद्राष्ट्रं शोकमावहम् ॥ ८३ ॥

सम्प्रोक्षणं ततः कृत्वा शताष्टकलशान्वितम् ।
वक्त्रमण्डपसंयुक्तं प्रतिमामण्डपं विशेत् ॥ ८४ ॥

ग्रामश्रीस्त्वन्यथा कृत्वा ग्रामश्रीस्त्वन्यथा भवेत् ।
स्थानशुद्धिं ततः कृत्वा तन्त्रादींश्च समाचरेत् ॥ ८५ ॥

स्नपनं शान्तिहोमं च जपेत् पाशुपतं शतम् ।
कशिकस्य तु देवानां स्नपनं कारयेत् बुधः ॥ ८६ ॥

स्नानमण्डपवेशा च[य] पुण्याहं पञ्चगव्यकैः ।
शान्तिहोमं ततः कृत्वा स्नपनं कारयेत बुधः ॥ ८७ ॥

स्नानमण्डपवेशाय पुण्याहं पञ्चगव्यकैः ।
शान्तिहोमं ततः कृत्वा स्नपनं कारयेच्छिवः[द्बुधः] [1] ॥ ८८ ॥

अन्तर्मण्डलशालं च अभ्यन्तरे प्रवेशयेत् ।
स्नपनं शान्तिहोमं च पुनः कर्म समाचरेत् ॥ ८९ ॥

---

1. पद्यमिदं 87 तमपद्यस्य पुनरुक्तमिव प्रतिभाति ।

अन्तर्हार[1]प्रवेशं[शे] च मध्यहार[2]प्रवेशकम् [के] ।
सम्मार्जनस्य लेपं[लेपे] च पुण्याहं पञ्चगव्यकैः ॥ ९० ॥

पचनालये निवेशं च[3] नारीणां तु भयं भवेत् ।
स्थलशुद्धिं ततः कृत्वा प्रोक्षयेत् पञ्चगव्यकैः ॥ ९१ ॥

अन्नपूर्णेश्वरीं कृत्वा स्नपनं प्रोक्षयेत्[4] बुधः ।
अग्निन्नकेतुनात्वात्तु[5] पुनः सन्धानमाचरेत् ॥ ९२ ॥

संस्कारं च क्रमेणैव हुनेत्[6] पाशुपतं शतम् ।
वज्रादि यद्रसालैः[ले] च रुधिरस्रावमेव च ॥ ९३ ॥

राक्षसानां भयं चैव शीघ्र[7]रन्ध्राणि घट्टयन् ।
व्यपोह्य वास्तुशुद्धिं च देवस्य स्नपनं कुरु ॥ ९४ ॥

रक्तस्रावे तु पतिते राष्ट्रे क्षुद्भयवासिनाम् [नः] ।
शिलायां तु शिलाघर्षे भूमिर्वा सर्वशुद्धये ॥ ९५ ॥

इष्टिका च सुधा यैर्वा प्रादेशमवटं त्यजेत् ।
पुनःसन्धानकं कृत्वा नीत्वा भूमिनिवारिणा ॥ ९६ ॥

शिलास्थानं च प्रक्षाल्य सुधाया इष्टिकामयम् ।
अच्छेदे दहनं कृत्वा प्रायश्चित्तक्रमं कुरु ॥ ९७ ॥

---

1. अन्तर्द्वार–
2. मध्यद्वार–
3. पचनालयवेशे च–
4. कारयेत्–
5. विच्छिन्नकेतुकत्वे तु–
6. जुहुयात्–
7. शीघ्रं–

द्वितीयावरणे पीठे अभ्यन्तरे निवेशयेत् ।
अथवा भद्रपीठं [ठे]च गोपुराभ्यन्तरेऽपि वा ॥ ९८ ॥

रक्तस्रावे प्रवेशं च धामश्रीस्त्वन्यथा भवेत् ।
तद्दोषशमनार्थाय सम्मार्जनं च लेपयेत् ॥ ९९ ॥

तत्तन्मृत्यु[त्सु] घ[ख]नित्वा तु तालमात्रेण कारयेत् ।
अवटं सेचयेत् गव्यैः सिकतैः[1] पूरयेत् बुधः ॥ १०० ॥

बलिपीठे[ठं] तु यत् स्पृष्ट्वा राजा दुर्जयमाप्नुयात् ।
क्षालयेत् बलिपीठे [ठं]तु बिल्वपत्रेण घर्षयेत् ॥ १०१ ॥

वक्त्रस्थानाधिकं कुम्भं स्थापयेत् विधिपूर्वकम् ।
गर्भगेहे च लिङ्गे च पीठे च कौतुके तथा ॥ १०२ ॥

स्रवेत्यस्त्वा तु रुधिर[2]शा[श]स्त्रपाषाणगा[का]दिभिः ।
तालुमूले च कर्णौ च [र्णे च]नराणां रुधिरं विशेत् ॥ १०३ ॥

तद्दृष्ट्वा भूतवेतालपिशाचाः प्रेतराक्षसाः ।
एताश्च देवताः सर्वे आश्रयन्ति न संशयः ॥ १०४ ॥

राजराष्ट्रभयं कृत्वा भूपतिस्त्वन्यदेशतः ।
शीघ्रं दृष्ट्वा तु तत्काले उष्णोदकं तु सेचयेत् ॥ १०५ ॥

तुलसीबिल्वपत्रं च दूर्वा गोमय[3]घर्षयेत् ।
शुद्धाभिषेकैः संस्नाप्य तैलपिष्टामलादिना ॥ १०६ ॥

---

1. सिकताभिः–
2. स्रवेद्यद्वा तु रुधिरम्–
3. गोमयं–

क्षीराभिषेकः कर्तव्यः भारं भारार्धकं विदुः ।
शिवमन्त्रं सहस्रं च मूलमन्त्रं तदर्धकम् ॥ १०७ ॥

पाशुपदै[तैः] तदर्धं जपेत् संख्यां पृथक् पृथक् ।
पक्वक्षीरं निवेद्यं च कदलीगुडसंयुतम् ॥ १०८ ॥

पञ्चशुद्धिं ततः कृत्वा पार्वतीमन्त्रकं शतम् ।
रुद्रस्य कवचं कृत्वा प्रादेशो बाह्यमेव हि ॥ १०९ ॥

पाचकं गव्यसेचित्वा [1] अस्त्रमन्त्रेण देशिकः ।
दर्भमालावृतं चैव पट्टसूत्रस्य वेष्टयेत् ॥ ११० ॥

प्रासादशुद्धिदं कृत्वा जीवसूक्तेन मन्त्रतः ।
अष्टमृत्सलिलिङ्गेन अवगाहसलिङ्गके ॥ १११ ॥

आशीश्च शान्तिहोमं च त्रिरात्रमेकरात्रिके ।
अवगाहने मोषञ्च सहस्रकलशैर्युतम् ॥ ११२ ॥

सम्प्रोक्षणं ततः कृत्वा दिशाहोमं च कारयेत् ।
गोपुराभ्यन्तरे ताले तद्वृत्तं तु समाचरेत् ॥ ११३ ॥

तत्तच्छीघ्रं तु कर्तव्यं . . . प्रोक्षणं कुरु ।
पञ्चविंशतिमूर्तिं च प्रोक्षयेत् कलशैरपि ॥ ११४ ॥

पाशुपतं सहस्रं च जपेदाचार्यमूर्तिकः ।
आखुभुङ्मूत्रपीठा च उत्कारजातुतके मृते ॥ ११५ ॥

. . . गे च पीठके . . . प्रतिबिम्बके ।
प्रवेशस्पृष्टिते चैव [2] प्राणिनां क्षुद्रयं भवेत् ॥ ११६ ॥

---

1. पाचितं गव्येन सेचयित्वा–
2. प्रवेशस्पृष्टके चैव–

स्थानहीनं न कर्तव्यं शमनार्थं विशेषतः ।
मृद्भाण्डानि विसृज्याथ वस्त्रादीन् शूकसंस्थितम् [तान्] ॥ ११७ ॥

स्थलशुद्धिक्रमेणैव लिङ्गशुद्धिं तु पूर्ववत् ।
पीठं पाशुपतक्षाल्य [1] तुलसीबिल्व घर्षयेत् [2] ॥ ११८ ॥

पञ्चगव्याभिषेकं तु तदभीभस्मैस्तु लेपनम् [3] ।
तन्मूर्तिं कुम्भ आवाह्य कल्पितैः षोडशैर्युतम् [4] ॥ ११९ ॥

सर्वबीजेन योजित्वा [5] तत्त्वमूर्तिं तु योजयेत् ।
कुम्भन्यासक्रमेणैव साधयेत् साधकोत्तमः ॥ १२० ॥

तैलाभ्यङ्गादितः स्नाप्य [6] जलस्नानान्तरान्तरेत् ।
कुम्भाभिषेकः कर्तव्यः शान्तिहोमं समाचरेत् ॥ १२१ ॥

उरगोत्कारमण्डं च [7] जननीमृतसम्भवे ।
स्पृष्टे च कौतुके लिङ्गे तच्चद्गर्भे तु सम्भवे ॥ १२२ ॥

राजराष्ट्रभयं क्रूरं दोषयेत् शान्तिमाचरेत् ।
स्नपनं तत्र कुर्वीत शान्तिहोमं तु कारयेत् ॥ १२३ ॥

पुनःसन्धानकं कृत्वा जपेत् पाशुपतं शतम् ।
अन्येषु परं गव्यापि तु च्छ वेशयेत् ॥ १२४ ॥

---

1. पाशुपतेन प्रक्षाल्य–
2. तुलसीबिल्वैः घर्षयेत्–
3. अभितो भस्मलेपनम्–
4. षोडशसिर्युतम्–
5. योजयित्वा–
6. स्नापयित्वा–
7. उरगोत्कारे अण्डे च–

जाते मृते तु यद्दोषे स्नानगव्यैश्च कारयेत् ।
गोधिकागृहगोधिश्च सम्भवे हर्म्यलिङ्गके ॥ १२५ ॥

जाते मृतेऽण्डके चैव प्राप्ते तु स्नानशुद्धयेत् ।
तद्दोषशमनार्थाय स्नापयेत् पञ्चगव्यकैः ॥ १२६ ॥

लिङ्गपीठस्य मध्ये तु स्थलरन्ध्रस्य मध्यमे ।
आदिप्रासादहर्म्ये च गोपुरे परिवारके ॥ १२७ ॥

शालान्तरे च बाह्ये च ध्वजदण्डस्य वा पुनः ।
ध्वजपीठान्तरे भद्रे रक्तकन्या समुत्थिते ॥ १२८ ॥

महस्त्रीमुखवेशित्वा धनधान्यविहीनके ।
लिङ्गस्याष्टदले चैव छे[श्वे]तकन्यासमुत्थिते ॥ १२९ ॥

आराधे अष्टभाण्डं च हीने रन्ध्रस्य मध्यमे ।
तत्राष्टनाशनं कुर्यात् नृपस्य मरणं ध्रुवम् ॥ १३० ॥

उष्णरोग[1]समुत्पन्ने तद्ग्रामवासिनावहे[2] ।
शमनार्थं तु तद्दोषं[3] तमृदुस्सर्वमुद्धरे[4] ॥ १३१ ॥

अधिवासनकुम्भं तु कारयेद्देशिकोत्तमः ।
नदीवालुकपूरित्वा[5] जले सेचनचित्कणे[6] ॥ १३२ ॥

---

1. उष्णरोगे-
2. वासिबाधके-
3. तद्दोषशमनार्थं तु-
4. तमृजुस्सर्वमुद्धरेत्-
5. नदीवालुकाभिः पूरयित्वा-
6. जलसेचनचिक्कणम्-

अतोऽष्टबन्धनं कुर्यात् योजयेन्मूर्तिकुम्भकैः ।
स्नपनं तत्र कुर्वीत शीतकुम्भं न कारयेत् ॥ १३३ ॥

लिङ्गस्य प्रतिमे चैव [1] योजयेत्तु विशेषतः ।
अन्स्त्री पिङ्गली चैव तत्प्रदेशे[शं] तु शोधयेत् ॥ १३४ ॥

पुण्याहं प्रोक्षणं कृत्वा ब्राह्मणान् भोजयेत्ततः ।
प्राकाराभ्यन्तरे बाह्ये वल्मीके तु समुत्थिते ॥ १३५ ॥

तत्र स्थानि च [2] खानित्वा पञ्चहस्तावटं बुधः ।
सिकतैः [3] लवणैः द्रव्यैः पूरितैरेवटे [4] बुधः ॥ १३६ ॥

ब्राह्मणान् भोजयेत्तत्र स्नपनं शान्तिहोमकम् ।
प्रासादे गोपुरे साले सन्निधावृक्षहीनके ॥ १३७ ॥

ध्वजस्य वृषहीनस्य दण्डाग्रे वृषहीनके ।
क्रियाया मन्त्रनाशं [शे]च गवानां नाशनं भवेत् ॥ १३८ ॥

पुनःसन्धानकं कृत्वा सम्प्रोक्षणमथाचरेत् ।
आरोप्यमन्यकाले तु वृषभं[भे] पतिते भुवि ॥ १३९ ॥

राष्ट्राणां नाशनं प्रोक्तं राजा[ज्ञो] वाहनहीनके ।
सम्प्रोक्षणं ततः कृत्वा पुनः सन्धानमाचरेत् ॥ १४० ॥

ध्वजदण्डाग्र उक्षे तु उत्थिते नासि[शि]ते यदि ।
ध्वजदण्ड[स्य] मूलं[ले] च इष्टकामृदुपीठके ॥ १४१ ॥

---

1. प्रतिमायां च-
2. तत्तत्स्थानं च खनित्वा-
3. सिकताभिः-
4. पूरयेदवटं-

अदुष्टबेरं कृत्वा तु मूलमावाह्य तन्मयम् ।
पूर्ववत् पूजनं कृत्वा दण्डमूले तु योजयेत् ॥ १४२ ॥

तत्तदावाहन[ने] हीने तत्तद्वाहनहीनके ।
अङ्गोपाङ्गप्रत्यङ्ग[1]हीने स्थानविहीनके ॥ १४३ ॥

पुनःसन्धानकं कृत्वा तत्कुम्भाष्टा[2]भिषेचयेत् ।
तन्मन्त्रं च शतं जप्त्वा तत्तस्थाने तु योजयेत् ॥ १४४ ॥

काकादिपक्षविष्ठा च[श्च] आघ्राणमपहारणम् ।
बेरे च बलिपीठे च क्षालयेत् शुद्धवारिणा ॥ १४५ ॥

गव्येन स्नापयेत्[3] कृत्वा तैलपिष्टामलादिना ।
शिवकुम्भस्य वर्धन्यां स्थापयेत्तु प्रयत्नतः ॥ १४६ ॥

काकैर्वा कौशिकैर्वाऽपि नैवेद्यं तण्डुले न्यच[4] ।
नैवेद्यतण्डुलघ्राणं [घ्राणो]पुनस्तण्डुलमाचरेत् ॥ १४७ ॥

नैवेद्यपात्रे न्यस्त्वा तु[5] पुनः पचनमारभेत्[6] ।
तत्पात्रं श्वानजातिश्च संस्कारेण तु योजयेत् ॥ १४८ ॥

अन्नं . . . य[7]काले तु पतितं पक्षिविष्ठया ।
नैवेद्यमन्यथा कृत्वा पुनः पचनमारभेत्[8] ॥ १४९ ॥

---

1. अङ्गैरुपाङ्गैः प्रत्यङ्गैः–
2. कुम्भानष्टा–
3. स्नपनं–
4. तण्डुलस्य च–
5. न्यस्य तु–
6. मारभेत–
7. अन्नं पाकाय–
8. मारभेत–

पचने शेषमन्नं च शिवाग्रे शेषमाचरेत् ।
मध्ये तु स्पर्शनं चैव तच्छेषं वर्जयेत् क्रमात् ॥ १५० ॥

शिवाग्रे स्थापनं चैव शिवपूजाविधिक्रमम्[1] ।
सूचितं तस्य कर्मी च जलमन्नं च योजयेत् ॥ १५१ ॥

प्रमादाद्दोष उत्पन्ने प्रायश्चित्तविधिं कुरु ।
सम्प्रोक्षणं ततः कृत्वा प्रतिष्ठां कारयेत् बुधः ॥ १५२ ॥

नदीस्रोततटाके तु सङ्कटं स्थाननिर्णयम् ।
एकपार्श्वे द्विपार्श्वे वा त्रिपार्श्वे स्थानसङ्कटम् ॥ १५३ ॥

यस्मिन् देशे प्रकाशे तु स्त[त]त्रैवाभिमुखं भवेत् ।
स्वस्थाने भवनं कल्प्य[2] बेरं तत्रैव योजयेत् ॥ १५४ ॥

पौराणिके पौरुषेये क्षेत्रे पूर्वदृढक्रमात् ।
कूपाने[3] तटाके च स्थानं तत्रैव योजयेत् ॥ १५५ ॥

अवधिषंबलक्षिण्यां प्रमाणं चैव यद्भवेत् ।
न दोषाय भवेत् सर्वं यत्तदायुर्भविष्यति ॥ १५६ ॥

नदीस्रोते तटाके च चर्चिते हर्म्यबेरयोः ।
नृपतिस्त्वन्यथा चैव तद्ग्रामं [मे]भवति ध्रुवम् ॥ १५७ ॥

नदीतटाके चलिते शतदण्डं व्यपोह्य च ।
तत्स्थाने चोत्तरे चैन्द्र ईशे पश्चिममे[के] तथा ॥ १५८ ॥

---

1. विधिक्रमात्–
2. कल्पयित्वा–
3. उदपाने– ( वापीकूप– )

स्थाप्य[1] बेरा[रं] शुचौ देशे भवनं कारयेत् ततः ।
प्रतिष्ठाकर्मकार्यं च तद्दोषशमनाय च ॥ १५९ ॥

हर्म्ये च गोपुरे द्वारे भित्तिप्राकारमे[ए]व च ।
मधुसर्पप्रवेशं[शे] च परचक्रात् भयं भवेत् ॥ १६० ॥

तद्राष्ट्रकलहं[हः] चैव तद्दोषशमनाय च ।
स्नपनं पञ्चविंशत्या शान्तिहोमं समाचरेत् ॥ १६१ ॥

कचित् प्रमादमु[उ]त्पन्ने चण्डमारं च मुच्यते[2] ।
भूमि[मेः] वा कम्पनं चैव तटीस्पर्शलसङ्कटे[3] ॥ १६२ ॥

प्रासादं[दे] पतिते बिम्बे पीठे वा स्थण्डिलान्तिके ।
वाहनं[ने] परिवारं[रे] च शिवकर्मादिहीनके ॥ १६३ ॥

सुधार इष्टिकर्म च[4] दारुकर्म[5] च दग्धके ।
सुवर्णस्पर्शतटिके स्फोटि[ट]नादिविहीनके ॥ १६४ ॥

यथोक्तविधिवच्चैव शीघ्रं सन्धानमुच्यते ।
न्यूनातिरिक्तं तत्सर्वं प्रायश्चित्तं समाचरेत् ॥ १६५ ॥

दोषनाशसमुत्पत्तिप्रायश्चित्तं विधीयते ।
प्रायश्चित्तविहीने तु ग्रामे वा नगरेऽपि वा ॥ १६६ ॥

---

1. स्थापयित्वा–
2. चण्डमारुत उच्यते–
3. तटित्स्पर्शनसङ्कटम्–
4. विदीर्णे इष्टिकर्म स्यात्–
5. कर्म–

केटके कुब्जके चैव पुरे वा राजधानिके[1] ।
शून्येष्वा[ऽप्य]यतनो[ने] वेरं पिशाचब्रह्मराक्षसाः ॥ १६७ ॥

भूतप्रेताश्च नागाश्च आश्रयन्ति न संशयः ।
तद्ग्रामनाशनं चैव सर्वस्थाने जनान् हनेत्[2] ॥ १६८ ॥

त्रया[यो] रोगाः[गाः] प्रवर्तन्ते राजराष्ट्रं विनश्यति ।
तस्मात् सर्वप्रयत्नेन प्रायश्चित्तं समाचरेत ॥ १६९ ॥

शिवार्चनस्य काले तु यथा दोषं[षः] प्रवर्तते ।
लिङ्गं वा प्रतिमा[मां] वाऽपि परशुं शूलमुच्यते ॥ १७० ॥

खण्डं च कलहश्चैव धनुः खड्गं चमेव च[3] ।
अन्यैश्चा[4]युधसंयुक्तं बलिकाले प्रदग्धनम् ॥ १७१ ॥

मानुषैर्वाऽपि रोधः स्यात कालातिक्रमणं भवेत ।
अन्यैर्वा यत्र हीनं तु प्रमादात दोषमुद्भवम्[5] ॥ १७२ ॥

तद्दोषशमनार्थाय जलसम्प्रोक्षणं कुरु ।
तत्तच्छान्तिविहीने तु प्रजानां नाशनं भवेत् ॥ १७३ ॥

नित्योत्सवबलिहीनेऽप्यसन्धानेत्स्थथैव च[6] ।
तस्य होमं प्रकुर्वीत पुनःसन्धि समाचरेत् ॥ १७४ ॥

---

1. राजधान्यां–
2. हन्यात्–
3. च चर्म च–
4. अन्यश्चा–
5. दोष उद्भवेत्–
6. प्यसन्धाने तथैव च–

यस्य होमविहीने तु तस्य शान्ति समाचरेत् ।
कालाधिक्यं भवेत्तत्र होमाधिक्यं भवेत्ततः ॥ १७५ ॥

यस्य होमविहीने तु तस्य शुद्धिं न कारयेत्[1] ।
ग्रामं[मे] वा नगरं[रे] वाऽपि नराणां व्याधिपीडितम् ॥ १७६ ॥

तस्मात् सर्वप्रयत्नेन शान्ति कुर्यात् विचक्षणः ।
नृत्यगेयविहीने तु वाद्यहीनं [ने] तथैव च ॥ १७७ ॥

करणं मुद्राविहीनं तु[2] शान्तिहोमं तु कारयेत् ।
नृत्तकाले प्रमादं[दः] तु नराणां पतितानि च[3] ॥ १७८ ॥

ततो होमं प्रकुर्वीत पाशुपते शतं जपेत्[4] ।
आज्याहुतिसहस्रं वा क्षेत्रशान्ति तथा कुरु ॥ १७९ ॥

तस्मात् भूतं[5] समारभ्य प्रागादीनां प्रदक्षिणम् ।
बलिप्रवेशकाले तु भेरीताडनहीनके ॥ १८० ॥

मार्जनं[ने] लेपनं [ने]हीनं[ने] उत्सवं वर्जयेत्ततः ।
हीने तु[6]मुत्सवं कुर्यात् स्थाननाशं[शो] भविष्यति ॥ १८१ ॥

तस्मात् सर्वप्रयत्नेन शान्तिहोमं विचक्षणः ।
ततस्तु शेषमातोद्यं पटहादि यथाक्रमम् ॥ १८२ ॥

---

1. च कारयेत्–
2. मुद्राकरणहीने तु–
3. पतनेऽपि च–
4. शतं पाशुपतं जपेत्–
5. भूतबलिं–
6. विहीन–

उत्सवस्य तु काले च नरादिपक्ष[क्षि]लङ्घने ।
प्रमादाल्लङ्घयित्वा तु स्नपनं शान्तिहोमकम् ॥ १८३ ॥

महादोषाः प्रवर्तन्ते देवदासी रजस्वला ।
दोषानुरूप[पं] संवक्ष्ये स्नपनं शान्तिहोमकम् ॥ १८४ ॥

यानकाले तु तल्लिङ्गा[ङ्गे] यानते[तः] पतिते भुवि ।
पूर्ववत्स्थितकं कृत्वा अघोरेण [1] शतं जपेत् ॥ १८५ ॥

बेरादि[दौ] पतिते भूमौ तल्लिङ्गं तु विसर्जयेत् ।
नवलिङ्गं प्रकर्तव्यं पूर्वोक्तविधिना सह ॥ १८६ ॥

सम्प्रोक्षणं ततः कृत्वा शेष[षं] प्रदक्षिणं कुरु ।
तद्बिम्बे पतिते भूमौ स्नापयेत् पञ्चगव्यकैः ॥ १८७ ॥

स्नपनं कारयेदन्ते शान्तिहोमं तु कारयेत् ।
चरुपात्रं[त्रे] विहीने च चरुणा पतितेन च ॥ १८८ ॥

अघोरेण चरुं हुत्वा शेषं प्रदक्षिणं कुरु ।
बलिदीपविहीने तु तत्कृत्वा स्वयमन्त्रतः [2] ॥ १८९ ॥

दीपमारोपयेद्विद्वान् तद्दोषशमनाय च ।
भेरीताडनहीने च बलितालविहीनके ॥ १९० ॥

स्थानभ्रंशो भवेत्तत्र प्राप्ते वरुणमालिखेत् ।
पीठप्रदक्षिणं नेष्टं [3] स्थनकावाद्यवर्जयेत् [4] ॥ १९१ ॥

---

1. अघोरस्य–
2. चास्त्रमन्त्रतः–
3. चेष्टं–
4. स्नानवाद्यं विवर्जयेत्–

सुषिरं [गानं][1] घनं वाद्यं वर्षकाले प्रसेवितम् ।
चर्मं विवर्जयित्वा तु अन्यकाले प्रसेवितम् ॥ १९२ ॥

पाशुपतेन मन्त्रेण शतमष्टोत्तरं शतम्[2] ।
दश[3]तालविहीने तु तद्दशादेवमन्त्रतः ॥ १९३ ॥

अष्टोत्तरशतं हुत्वा तद्दोषशमनाय च ।
देवानां स्पर्शनं चैव स्नपनं कारयेत् क्रमात् ॥ १९४ ॥

देशिकस्पर्शनं चैव तु . . . मेववा ।
अचार्यदक्षिणाहीने स्थाननाशं[शः] धनक्षयम्[यः] ॥ १९५ ॥

तद्दोषशमनार्थाय उपनिष्कसुवर्णकम् ।
अपोऽग्निना च कार्यं च अन्यदक्षाब्जकुब्जकाम् ॥ १९६ ॥

शिपिविष्टबहिर्बीजान् मुखे . . . . ।
यद्ध्रुवं क्रोधनं चैव अहिचारकुक्कुटकान् ॥ १९७ ॥

तद्दोषं[षः] यजमानस्य पुत्रनाशं कुलक्षयम् ।
पञ्चस्नपन[4]कर्तव्यं यथोक्तं विधिवत् क्रमात् ॥ १९८ ॥

मन्त्रहीनार्चनाहीनं[5] क्रियाहीनं[ने] ततः परम् ।
परचक्रबलं चैव सुचक्रमबलात् क्षयम्[6] ॥ १९९ ॥

---

1. चर्म–
2. जपेदष्टोत्तरं शतम्–
3. दशा (?)
4. स्नपनं पञ्च–
5. मन्त्रहीनेऽर्चनाहीने–
6. स्वचक्रस्य बलक्षयः–

नित्यार्चनं च तत्काले त्वन्यदीक्षा[क्षां] प्रदर्शयेत् ।
अन्यदीक्ष[क्षा]प्रदेशं[शे] तु नाशनं भवति ध्रुवम् ॥ २०० ॥

तद्दोषशमनार्थाय अन्यकाले विवर्जयेत् ।
मन्त्रहीने तु मरणं क्रियाहीने तु रुग्भवेत् ॥ २०१ ॥

नैवेद्यहीने दुर्भिक्षं अग्निहीने तु सङ्करम् ।
बलिहीने ग्रामनाशं[शः][स्यात्] नृत्तहीने तु दुःखितः ॥ २०२ ॥

तद्दोषशमनार्थाय प्रायश्चित्तविधिक्रमम् ॥ २०३ ॥

इति श्रीवातुले शुद्धाख्ये शतसहस्रिकायां संहितायां
सर्वप्रायश्चित्तविधिपटलः समाप्तः ॥

[श्रीगुरुभ्यो नमः । विकटचक्रविनायकाय नमः । काञ्चीपुरं अय्यंज् गुरुक्कळ्
तिरुवालक्कोविलिले हनूमतकुंज्वन् स्वहस्त लिखितम् ॥ P 4045
O.R.I. Mss. Pages—172-189].

—o—

## पुण्याहविधिः

—o—

उत्तमं स्वर्णपात्रं तु ताम्रपात्रं तु मध्यमम् ।
अधमं मृण्मयं प्रोक्तं पात्रलक्षणमुच्यते ॥ १ ॥

द्वादशाङ्गुलमायामं [1] नाहद्वाविंशताङ्गुलम् [2] ।
ओष्ठद्वयं गुलिं [3] चैव युगविस्तारमुच्यते [4] ॥ २ ॥

घ्राणं वेदाङ्गुलं प्रोक्तं पात्रलक्षणमुच्यते ।
कालं भिन्नं च कोणं च वर्जयेद्देशिकोत्तमः ॥ ३ ॥

सलक्षणमिति प्रोक्तं यावत्पात्रेण योजयेत् ।
बिम्बफलसमाकारं वर्धनि [5] ग्राह्य [6] देशिकः ॥ ४ ॥

तन्तुना वेष्टयेत् पात्रं गवाक्षसदृशं कुरु ।
पात्राणामधिदैवत्यं प्रिष्टे [7] ब्रह्मादिदैवतम् [8] ॥ ५ ॥

मध्यमे [9] विष्णुदैवत्यं ओष्ठं [10] वै रुद्रदैवतम् ।
पार्श्वयोनग्नि [11] कालौ च मध्यमे सप्ततीर्थकम् ॥ ६ ॥

---

1. ङ्गुलः आयामः–
2. नाहो द्वाविंशदङ्गुलः–
3. अङ्गुलं–
4. स्तार उच्यते–
5. समाकारां वर्धनीं–
6. सङ्गृह्य–
7. पृष्ठे–
8. धिदैवतम्–
9. मध्यमं–
10. ओष्ठे–
11. रग्नि–

घ्राणं विश्वेश्वरं चैव[1] इत्येते[2] अधिदेवताः ।
पात्रप्रक्षालनं कृत्वा प्रोक्षयेत् शुद्धवारिणा ॥ ७ ॥

वर्धन्याघो[3]मुखं स्थाप्य[4] दर्भैरुभयवर्मणा ।
पात्रमुद्धरणं[5] चैव प्रोक्षयेच्छुटुकेन तु ॥ ८ ॥

हुंफट[6]न्तास्त्रमन्त्रेण धूपधूम्रेण[7] पूरयेत् ।
प्रत्यं[8] शिरसि मन्त्रेण शुद्धतोयेन पूरयेत् ॥ ९ ॥

तन्मध्ये कूर्चसंयुक्तं स्वर्णमित्यपि धीयते ।
शिवतण्डुलमेवोक्तं मध्यमं तु तदर्धकम् ॥ १० ॥

द्विप्रस्थं कन्यसंप्रोक्तं तण्डुलं तु विधीयते ।
कांस्यपात्रेण तण्डुल्यं[9] क्रमुकफलसंयुतम् ॥ ११ ॥

ताम्पूलं दर्भसंयुक्तं बृहतीफलसंयुतम् ।
गन्धैः पुष्पैः तथा धूपैः दीपैरर्घ्यैश्च पूजयेत् ॥ १२ ॥

चतुर्विप्रं ततोऽहीनं एकादश्यां परान्नहि[10] ।
अभ्यङ्गं च तथः[11] कृत्वा पश्चात् स्नानं यथाक्रमम् ॥ १३ ॥

---

1. घ्राणे विश्वेश्वरश्चैव–
2. इत्येताः–
3. वर्धनीमधो–
4. संस्थाप्य–
5. पात्रस्योद्धारणं–
6. हुंफड–
7. धूमेन–
8. पात्रं–
9. तण्डुलं–
10. एकादशपरान् न हि–
11. ततः

शुक्लवस्त्रेण संवेष्ट्य शुक्लयज्ञोपवीतकम् ।
पादप्रक्षालनं कृत्वा आलयं तु प्रवेशयेत् ॥ १४ ॥

भूसुरान् . . . कृत्वा ताम्पूलं[1] तदनन्तरम् ।
आचार्यभूषणं कृत्वा वस्त्रहेमाङ्गुलीयकैः ॥ १५ ॥

हेमाङ्गुलीयकटकैः हारकुण्डलमण्डितम् ।
हेमयज्ञोपवीतं च पञ्चाङ्गयुतभूषणम् ॥ १६ ॥

नित्य[2] नैमित्तिके चैव काम्ये चैव तु कारयेत् ।
कर्मारम्भस्य तत्काले पुण्याहं चैव बुद्धिमान् ॥ १७ ॥

भूसुरान् हस्तमेवोक्तं देशिकं दर्भसंयुतम् ।
तत्कालस्यैव सङ्कल्प्य यावत्कर्मसमाचरेत् ॥ १८ ॥

दर्भांश्चैव[3] द्वयं कृत्वा द्वादशाङ्गुलमुन्नतम् ।
आचार्यदक्षिणे हस्तेऽनामिकायां तु योजयेत् ॥ १९ ॥

यावत्कर्म[4] करिष्यामि दर्भोद्वासनमुत्तरे ।
एवं क्रमेण चेत्युक्तं सङ्कल्प्यमिति बुद्धिमान् ॥ २० ॥

आपप्रयोगमाचार्य[5] शिवापस्सुरवाक्यकम् ।
गन्धाश्चैव तु आचार्य[6] सुगन्धाः प्रतिवाचकम् ॥ २१ ॥

---

1. ताम्बूलं–
2. नित्ये–
3. दर्भांश्चैव–
4. यावत्कर्म–
5. आपः प्रयोगमाचार्यः–
6. आचार्यः–

देशिकस्सुमनश्चैव सौमनस्यैव भूसुरान्[1] ।
अक्षतं देशिकश्चैव विप्रैस्तु प्रतिवाचकम् ॥ २२ ॥

देशिकं तु . . जपित्वा यो भूसुरायान जपेद् बुधः ।
यावत्सूत्रप्रकारेण पुण्याहं चैव बुद्धिमान् ॥ २३ ॥

स्वस्तिमध्ये तु यत्कर्म तत्कर्म[2] स्वस्तिवाचकम् ।
एवं क्रमेण पुण्याहं कारयेद्देशिकोत्तमः ॥ २४ ॥

भूसुरान् दक्षिणाप्रोक्तमाचार्यषड्गुणं भवेत् ।
आचार्यमनसा तृप्ति[3] देवसांनिध्यकारणम् ॥ २५ ॥

चलनं मनसा चैव[4] देवसांनिध्यनिष्फलम् ।
पूर्वाह्ने अभिषेकं तु[5] क्षत्रस्यैव तु वर्धनम्[6] ॥ २६ ॥

सायाह्ने अभिषेकं[7] तु वैश्यानां वर्धनं[8] क्रमात् ।
अर्धयामं[9] तथा प्रोक्तं[10] शूद्रवर्गस्य वर्धनम्[11] ॥ २७ ॥

---

1. सौमनस्यं तु भूसुराः–
2. तत्कर्म–
3. आचार्यमनसस्तृप्तिः–
4. मनसश्चैव–
5. अभिषेकस्तु–
6. वर्धनः–
7. अभिषेकः–
8. वर्धनः–
9. अर्धयामे–
10. प्रोक्तः–
11. वर्धनः–

भूसुरान् स्नापयेत् कुर्यात् पुत्रपौत्राधि[1]वर्धनम् ।
क्षत्रियं स्नापयेत् कुर्यात् भोगमोक्षप्रदायकम् ॥ २८ ॥

वैश्यानां स्नापयेत् कृत्वा[2] दाशीदाशास्य[3]वर्धनम् ।
शूद्राश्च स्नापनं चैव धनधान्यसमृद्धितम्[4] ॥ २९ ॥

पुण्याहफलमेवोक्तं सर्वशान्ति[5] तथैव च ।
आदिशैव इति प्रोक्तं पुण्याहं कारयेत् बुधः ॥ ३० ॥

गोगरण[6]पात्रविपुलं कुशाग्रं पाणिशोधनम् ।
माषमग्नजलं ग्राह्य[7] देहशुद्धिं तथैव च ॥ ३१ ॥

पुण्याहं तु[8] विधि[9]प्रोक्तं[10] पञ्चगव्यविधिं शृणु ॥

इति वातुले प्रतिष्ठातन्त्रे पुण्याहविधिपटलः समाप्तः ॥

[P. 4996 Mss. O.R.I. Ppge 23–56 A].

—o—

1. त्रासि–
2. कुर्यात्–
3. दासी दासस्य–
4. समृद्धिदम्–
5. सर्वशान्तिः–
6. गोकर्ण–
7. गृहीत्वा–
8. पुण्याहस्य–
9. विधिः–
10. प्रोक्तः–

## वातुले प्रतिष्ठातन्त्रे

## पञ्चगव्यविधिः

—o—

अथ वक्ष्ये विशेषेण पञ्चगव्यविधिक्रमम् ।
पक्कारः पापनाशं[1] स्यात् चकारः पुत्रवर्धनम्[2] ॥ १ ॥

गकारं[3] मोक्षसिद्ध्यर्थं व्यकारं[4] व्याधिनाशनम्[5] ।
सर्वलोकनिवृत्त्यर्थं[6] सर्वशान्तिकरं शुभम् ॥ २ ॥

सर्वयज्ञफलं प्रोक्तं सर्वदेहप्रियावहम् ।
दुर्भिक्षं तु[7] विनाशाय धनधान्यसमृद्धितम्[8] ॥ ३ ॥

ग्रामं च[9] राजराष्ट्रं च[10] सर्वलोकसुखावहम् ।
ब्रह्महत्ति[11]विनाशाय गोवहत्ति[12]विनाशनम् ॥ ४ ॥

उत्तमं मध्यमं चैव अधमं तु प्रशस्यते ।
उत्तमं द्रोणमेवोक्तं मध्यमं तु तदर्धकम् ॥ ५ ॥

---

1. पापनाशः–
2. वर्धनः–
3. गकारः–
4. व्यकारः–
5. नाशनः–
6. सर्वरोगनिवृत्त्यर्थं–
7. दुर्भिक्षस्य–
8. समृद्धिदम्–
9. ग्रामस्य–
10. राजराष्ट्रस्य–
11. ब्रह्महत्या–
12. गवहत्या–

अधम[1]माढकं चैव त्रिविधं परिकल्पयेत् ।
देवस्याग्रे विशेषेण मण्डपं चतुरश्रकम् ॥ ६ ॥

विस्तारेण समं प्रोक्तं मण्डपं कारयेत् बुधाः[2] ।
चतुद्वार[3]समायुक्तं चतुस्तोरणसंयुतम् ॥ ७ ॥

मार्जनं प्रोक्षणं चैव गोमयेनानुलेपनम् ।
चित्रवस्त्रैर्विधानैश्च[4] दुकूलवसनैस्तथा ॥ ८ ॥

दर्भमाल्यैश्च कर्तव्यं अश्वत्थो[5]दलसंयुतम् ।
पुष्पमाल्यैरलङ्कृत्य छत्रचामरमेव च ॥ ९ ॥

दर्पणं तु प्रकर्तव्यं[6] श्वेतताम्पूलमेव[7] च ।
नारदो[8] लिकुचैश्चैव कदलीनारिकेलकम् ॥ १० ॥

दाडिमीफलसंयुक्तं दिक्षु दिक्षु ध्वजैः क्रमात् ।
नानाविधैरलङ्कृत्य नानापुष्पैश्च शोभितम् ॥ ११ ॥

आचार्याय प्रकर्तव्यं स्नानं चैव तु कारयेत् ।
प्रसादं तु प्रवेशाय पादप्रक्षालनं कुरु[9] ॥ १२ ॥

---

1. अधम–
2. बुधः–
3. चतुर्द्वार–
4. वितानैश्च–
5. अश्वत्थ–
6. दर्पणस्तु प्रकर्तव्यः–
7. ताम्बूलमेव–
8. नारङ्ग–
9. कुर्यात्–

आचम्य विधिना चैव मण्डपं तु प्रवेशयेत् ।
शुक्लवस्त्रेण संवेष्ट्य शुक्लयज्ञोपवीतकम् ॥ १३ ॥

अस्त्रमन्त्रेण कर्तव्यं प्रोक्षयेत्[1] शुद्धवारिणा ।
शालिपिष्टेन रज्जुं स्यात् तोयमन्त्रेण कारयेत् ॥ १४ ॥

प्राक्सूत्रं युगसूत्रं स्यात् उदक्सूत्रं तथैव च ।
सूत्रात् सूत्रान्तरं तालनवकोष्ठेन लेखयेत् ॥ १५ ॥

उत्तमं तु चतुप्रस्थं[2] मध्यमं तु तदर्धकम् ।
अधमं प्रस्थशालिं तु प्रत्येकं तु पृथक्पृथक् ॥ १६ ॥

आचार्यभूषणं कृत्वा स्वर्णयज्ञोपवीतकम् ।
कटकं मणिबन्धं च कण्ठभूषणमेव च ॥ १७ ॥

हारकेयूरसंयुक्तं अङ्गुलीयकसंयुतम् ।
अञ्जनं तु प्रकर्तव्यं पञ्चमुद्रैरलङ्कृतम् ॥ १८ ॥

भस्मना पूर्ववत् कुर्यात् त्रिपुण्ड्रं तत् सुयोजयेत् ।
उभयेन पवित्रेण सवर्ण[3] कुशसमन्वितम् ॥ १९ ॥

प्राणायामं च[4] कर्तृव्यं[5] करन्यासं तु कारयेत् ।
अङ्गन्यासे विकर्तव्यं[6] अष्टत्रिंशत् कला न्यसेत् ॥ २० ॥

---

1. प्रोक्षणं–
2. चतुःप्रस्थं ।
3. सुवर्ण–
4. प्राणायामश्च–
5. कर्तव्यः–
6. न्यासोऽपि कर्तव्यः–

मन्त्रन्यासं प्रकर्तव्यं[1] व्योमव्यापिं तथैव च ।
तिलकं चन्दनं चैव देशिकं शिव भावयेत् ॥ २१ ॥

शङ्खदुन्दुभिनिर्घोषै[2] भेरीपटक[3]मर्दलैः ।
कदलीफलसंयुक्तं नारिकेलं निवेदयेत् ॥ २२ ॥

सर्वविघ्नविनाशाय ताम्पूलं[4] तु निवेदयेत् ।
वेदध्वनिसमायुक्तं स्तोत्रध्वनिसमायुतम् ॥ २३ ॥

पाद्यमाचमनं चार्घ्यं स्थापयेत्तु विशेषतः ।
विघ्नेश्वरं तु कर्तव्यं अर्चयित्वा विशेषतः ॥ २४ ॥

पुण्याहं पूर्ववत् कुर्यात् पञ्चगव्य[5] समाचरेत् ।
भूतसङ्ख्याकुशैश्चैव पूर्वादि परिकल्पयेत् ॥ २५ ॥

मध्यमे शिवतत्त्वं तु पूर्वकोष्ठे सदाशिवम् ।
विद्यातत्त्वं तु दक्षिण्यां पुरुषतत्त्वं[6] तथोत्तरे ॥ २६ ॥

पश्चिमे कालतत्त्वं तु पृथिवतत्त्वं[7] तु पावके ।
अप्तत्वं निर्ऋतिकोष्ठेषु[8] वायुकोष्ठे मरुत्क्रमात् ॥ २७ ॥

---

1. न्यासः प्रकर्तव्यः ।
2. निर्घोषैः ।
3. पटह–
4. ताम्बूलं–
5. पञ्चगव्यं–
6. दक्षिणे पुरुषं तु–
7. पृथिवीतत्त्वं–
8. कोष्ठे–

ईशे प्रकृतिकोष्ठं[1] च कोष्ठपूजां[2] विधीयते ।
उत्तमं स्वर्णपात्रं तु ताम्रपात्रे तु मध्यमम् ।। २८ ।।

अधमं मृण्मयं चैव पात्रलक्षणमुच्यते ।
धर्माङ्गुलोन्नतं चैव नाहं[3] सप्तदशाङ्गुलम्[4] ।। २९ ।।

गलद्व्यंगुलं[5] चैव ओष्ठमेकाङ्गुलं[6] भवेत् ।
मुखविस्तारकर्तव्यं[7] वेदाङ्गुलं[8] तथैव च ।। ३० ।।

उत्तमं पात्रमित्युक्तं मध्यपात्रमिहोच्यते ।
वेदाङ्गुलं तु मानोच्चं नाहं सप्तदशाङ्गुलम्[9] ।। ३१ ।।

कण्ठत्रियङ्गुलं[10] चैव युगविस्तारमुच्यते[11] ।
एवमेव क्रमेणैव त्रिविधं पात्रमुच्यते ।। ३२ ।।

पूर्वादियुगपात्रैश्च द्रव्यपूर्णमथाचरेत् ।
किंशुका[12]कुसुमं पर्णे लक्षणं पात्रमुच्यते[13] ।। ३३ ।।

---

1. प्रकृतितत्त्वं–
2. पूजा–
3. नाहः–
4. शाङ्गुलः–
5. गलो द्व्यङ्गुलः–
6. ओष्ठ एकाङ्गुलः–
7. विस्तारः कर्तव्यः–
8. वेदाङ्गुलः–
9. नाहः सप्तदशाङ्गुलः–
10. कण्ठः त्र्यङ्गुलः–
11. र उच्यते–
12. किंशुक–
13. पात्रलक्षणमुच्यते–

तन्तुना वेष्टयेत् कुम्भं गवाक्षसदृशं[1] भवेत् ।
प्रक्षाल्य हृदयेनैव प्रोक्षयेदस्त्रमेव च ॥ ३४ ॥

दर्भैः कुम्भमथोत्थाप्य[2] वर्मणां[3] चैव बुद्धिमान् ।
वामदेवेन सम्प्रोक्ष्य कुम्भमुद्धृत्यमेव च[4] ॥ ३५ ॥

शीतारिधूम्रमित्युक्तं मध्यमे कूर्चसंयुतम् ।
प्रधानकुम्भदेवत्यं[5] प्रष्ठे[6] ब्रह्माधिदैवतम् ॥ ३६ ॥

मध्यमे विष्णुदैवत्यं ओष्ठ[7] वै रुद्रदैवतम् ।
विघ्नेशं स्कन्दमेवोक्तं[8] दक्षिणे तु तथैव च ॥ ३७ ॥

नन्दि[9] चैव महाकालः वामपार्श्वे तथैव च ।
चतुष्पदं चतुर्वेदं कुम्भमित्यधिदैवतम् ॥ ३८ ॥

मध्यमे सुप्रतिष्ठं च[10] सुशान्तं[11] पूर्वपात्रके ।
तेतजो[12] दक्षिणे चैव रत्नोदकं[13] तथोत्तरे ॥ ३९ ॥

---

1. सदृशः–
2. अधः स्थापयित्वा–
3. वर्मणा–
4. कुम्भउद्धार्यं एव च–
5. दैवत्यं–
6. पृष्ठे–
7. ओष्ठे–
8. विघ्नेशः स्कन्द एवोक्तः–
9. नन्दी–
10. तिष्ठश्च–
11. सुशान्तः–
12. तेजो वै–
13. रत्नोदकः–

अमृतपात्रे तु पश्चिम्यां[1] पात्रपूनां[2] विधीयते ।
धूपदीपं तथा चैव अर्घ्यं दद्यात् सुदेशिकः ॥ ४० ॥

आज्यं प्रस्थेन कर्तव्यं द्विप्रस्थं दविरुच्यते[3] ।
त्रिप्रस्थं क्षीरसंयुक्तं चतुप्रस्थं[4] तु गोमयम् ॥ ४१ ॥

षट्प्रस्थं चैव गोमूत्रं पञ्चगव्योत्तमं भवेत् ।
द्विपादं घृतसंयुक्ते प्रस्थं दधिभिरुच्यते ॥ ४२ ॥

प्रस्थार्थं[5] क्षीरसंयुक्तं द्विप्रस्थं गोमयं भवेत् ।
त्रिप्रस्थं चैव गोमूत्रं मध्यमं तु प्रकीर्तितम् ॥ ४३ ॥

एकपादं घृतं प्रोक्तं द्विपादं दधिरुच्यते[6] ।
त्रिपादं क्षीरमित्युक्तं चतुष्पादं तु गोमयम् ॥ ४४ ॥

षट्पादं चैव गोमूत्रं फलमात्रं[7] कुशोदकम् ।
एवमेव क्रमेणैव त्रिविधं पञ्चगव्यकम् ॥ ४५ ॥

मध्यमे क्षीरसंयुक्तं आप्यायस्वेति मन्त्रतः ।
पूर्वेण दधिसंयुक्तं दधिक्राविण्णेति मन्त्रतः ॥ ४६ ॥

शुक्रमसीति मन्त्रेण दक्षिणे घृत[8]विन्यसेत् ।
सावित्री चैव मन्त्रेण गोमूत्रमुत्तरे तथा ॥ ४७ ॥

---

1. पश्चिमे ।
2. पात्रपूजा–
3. दधि उच्यते–
4. चतुष्प्रस्थं–
5. प्रस्थार्धं–
6. दधि उच्यते–
7. पलमात्रं–
8. घृतं–

गन्धद्वारेति मन्त्रेण गोमयं पश्चिमे तथा ।
देवस्य त्वे तु[1] मन्त्रेण ईशे कुशोदकं न्यसेत् ॥ ४८ ॥

प्रस्थेन तैलसंयुक्तं पावकेन तु विन्यसेत् ।
कपित्थफलमात्रेण पिष्टामलकसंयुतम् ॥ ४९ ॥

कदलीफलमात्रेण रजनी[2]राक्षसे न्यसेत् ।
नारिकेलं च वायव्यं[3] तत्तत् स्थापनमेव च ॥ ५० ॥

कुर्यात् पुण्याहमेवं तु प्रोक्षयेत् पञ्चगव्यकैः ।
ईशानेन तु दुग्धं स्यात् पञ्चममभि[4]मन्त्रयेत् ॥ ५१ ॥

पुरुषेण दधि[5] चैव नवसङ्ख्यापि मन्त्रिताः[6] ।
अघोरेण घृतं चैव धातुसंख्याप्रकीर्तिताः[7] ॥ ५२ ॥

गोमूत्रं वामदेवेन वसुभि चैव[8] कारयेत् ।
गोमयं सद्यमन्त्रेण नवसंख्याभिमन्त्रिताः ॥ ५३ ॥

नारिकेलोदकं चैव शिरोमन्त्रं वसुक्रमात् ।
अस्त्रमन्त्रं जपेत् पश्चात् उदके नव भावयेत् ॥ ५४ ॥

---

1. त्वेति–
2. रजनीं–
3. वायव्ये–
4. पञ्चमिरसि–
5. दधि–
6. भिमन्त्रिताः–
7. प्रकीर्तिता–
8. वसुभिश्चैव–

पावके तैलसंयुक्तं व्याहृतिं चैव षट् जपेत् ।
पिष्ठा[1]मलकसंयुक्तं हृदयेन तु सप्तकैः ॥ ५५ ॥

एवं मन्त्रेण सम्पूज्य धूपदीपास्तमेव च ।
गोमयं कृष्णवर्णं स्यात् गोमूत्रं नीलमेव च ॥ ५६ ॥

कपिलेन घृतं प्रोक्तं शुक्लादधिभि[2] संयुतम् ।
रक्तवर्ण[3]पयश्चैव इत्येते पञ्चगव्यकैः[4] ॥ ५७ ॥

अभावे सर्ववर्णानां कपिलेका[5] प्रशस्यते ।
गोमयमक्षमात्रेण जलेनैव तु योजयेत् ॥ ५८ ॥

तृणमूलेन कर्तव्यं वर्जयेत्तु विशेषतः ।
अभावे तृणमूलं तु यजमानं[6] विनश्यति ॥ ५९ ॥

गन्धैश्च धूपदीपैश्च अर्घ्यं दद्यात् सुदेशिकः ।
अष्टोत्तरशतं चैव मूलमन्त्रं जपेत् बुधः ॥ ६० ॥

सुरभिमुकुलं चैव दिग्बन्धमवकुण्डनम् ।
गोमूत्रं श्रीपदं[7] चैव गोमयं रोगनाशनम् ॥ ६१ ॥

पयसा शत्रुनाशं[8] स्यात् दधिपुत्रस्य वर्धनम् ।
घृतं मोक्षं च[9] संयुक्तं पञ्चगव्यफलं क्रमात् ॥ ६२ ॥

---

1. पिष्ठा–
2. शुक्लेन दधि–
3. वर्णं–
4. गव्यकाः–
5. कपिल एकः ।
6. यजमानः–
7. श्रीप्रदं ।
8. शत्रुनाशः ।
9. मोक्षेण–

द्वारपूजां ततः कुर्यात् गर्भगेहं प्रवेशयेत् ।
आसनं मूर्ति[1] विन्यस्य मूलमन्त्रेण योजयेत् ॥ ६३ ॥

पाद्यं दद्यात् सुपादेन नेत्रेणाचमनं ददेत्[2] ।
अर्घ्यं शिरसि विन्यस्य धूपदीपं समाश्रितम् ॥ ६४ ॥

पूजापर्युषितं सर्वं चण्डेश्वरार्चनं भवेत् ।
शुद्धाभिषेककर्तव्यं[3] वस्त्रेणैव तु मर्दयेत् ॥ ६५ ॥

अभ्यङ्गं तु ततः कृत्वा पिष्टामलकसंयुतम् ।
शुद्धोदकेन संयुक्तं पुष्पं मूर्ध्नि सुयोजयेत् ॥ ६६ ॥

पञ्चगव्यं ततोद्धृत्य[4] पञ्चशान्ति समाचरेत् ।
स्वस्तिसूत्रं[5] जपित्वाऽथ नरसूक्तं जपेत् पुनः ॥ ६७ ॥

स्तोत्रमङ्गलवाद्यैश्च गीतध्वनिसमायुतम् ।
वेदध्वनिसमायुक्तं पञ्चगव्याभिषेचयेत् ॥ ६८ ॥

धूपदीपं ततो दद्यात् शुद्धाभिषेक[6]कारयेत् ।
रजनी चैव कर्तव्यं[7] नालिकेरोदकं तथा ॥ ६९ ॥

शुद्धोदकेन संयुक्तं अर्घ्यं दद्यात् सुदेशिका[8] ।
प्रातःकाले तु विप्राणां नृपे मध्याह्नमेव[9] च ॥ ७० ॥

---

1. आसने मूर्तिं–
2. दद्यात्–
3. शुद्धाभिषेकः कर्तव्यः–
4. ततः उद्धृत्य–
5. सूक्तं–
6. भिषेकं–
7. कर्तव्या–
8. सुदेशिकः–
9. मध्याह्न एव–

सायाह्ने वैश्य[1] कर्तव्यं अर्धरात्रे तु शूद्रयोः[2] ।
विप्राणां स्नापयेत् कुर्यात् पुत्रपौत्रादिवर्धनम् ॥ ७१ ॥

क्षत्रं तु स्नापयेत् कुर्यात् परचक्रं तु[3] नाशनम् ।
वैश्यानां स्नापनं चैव धनधान्यं समृद्धितम् ॥ ७२ ॥

शूद्राणां स्नापनं चैव भोगमोक्षं तथैव च ।
व्याधिक्लेशं[5] तु कर्तव्यं सर्वकालं विधीयते ॥ ७३ ॥

आदिशैवेन कर्तव्यं सर्वकर्म[6] समाचरेत् ।
पञ्चगव्यफलं चैव न भूतो न भविष्यति ॥ ७४ ॥

इति वातुले प्रतिष्ठातन्त्रे पञ्चगव्यविधिपटलः
समाप्तः ॥
हरिः ओम् शुभमस्तु

[P. 4996 O.R.I. Mss. Pages $26_b$–$33_a$]

— o —

1. वैश्यस्य-
2. शूद्रस्य-
3. परचक्रस्य-
4. धान्यसमृद्धिदम्-
5. क्लेशे-
6. सर्वकर्म-

## चर्यापादः

कुण्डसंस्कारमेवोक्तं[1] अग्निप्रज्वाल्यमेव च[2] ।
अग्निकार्यविधिः प्रोक्तं[3] प्रतिकुण्डं तु होमयेत् ॥ १ ॥

आचार्य[4]शिष्यसंयुक्तं[5] होमं कुर्याद्विचक्षणः ।
पालशो[6]दुम्बरं चैव अपामार्गं च प्लक्षकाः[7] ॥ २ ॥

पल[8]खादिरं चैव न्यग्रोधं वह्निमेव च ।
वैकङ्कतं च काश्मीर्य[9]समिद्भिः समुदाहृतम् ॥ ३ ॥

परिस्तरेण दर्भाणां परिधित्रयमेव च ।
पूर्वं स . . . घ ऊर्ध्वसमिधायध्वमिष्टरमेव च ॥ ४ ॥

ब्रह्माणं दक्षिणेऽभ्यर्च्य उत्तरे तु जनार्दनम् ।
परिषेचनं ततः कुर्यात् प्रोक्षणीपात्रमेव च ॥ ५ ॥

पूर्णपात्रं समादाय पूजयेत्तु जनार्दनम् ।
आज्यसंस्कारमेवोक्तं[10] स्वाहासहितमेव च ॥ ६ ॥

---

1. र एवोक्तः–
2. अग्निः प्रज्वाल्य एव च–
3. प्रोक्तः–
4. आचार्यः–
5. संयुक्तः–
6. पलाशो–
7. प्लक्षकम्–
8. पिप्पलं–
9. काश्मीर्यं–
10. संस्कार एवोक्तः–

होमान्ते तु बलिं कुर्यात् मेखलोपरि विन्यसेत् ।
तत्तत्सनाममन्त्रेण लोकपालबलिं क्षिपेत् ॥ ७ ॥

बहिर्बलिविधिं कुर्यात् अन्तर्बलिमथाचरेत् ।
? . . . ' धपालं च पावके चैव अन्र्बलि हि बलिं क्षिपेत् ॥ ८ ॥

प्रथमं अष्टनागं च द्वितीयं द्वादश- दिकम् ।
नागादिबलिं निक्षिप्य पूर्णाहुतिमथाचरेत् ॥ ९ ॥

अग्निमन्त्रमनुस्मृत्य स्वाहेति इति योजयेत् ।
अग्निमूर्तिं समावाह्य कुम्भमध्ये सुयोजयेत् ॥ १० ॥

हविर्निवेदयेत्तत्र सर्वदेवनिवेद्यकम् ।
होमान्ते भेरिघोषं[1] स्यात् सप्ततालविधिं[2] भवेत् ॥ ११ ॥

आहूय वाद्यकान् पश्चात् आचार्य[3]शिष्य एव वा ।
यागान्ते भेरिघोषः स्यात् वास्तुभूतबलिं क्षिपेत् ॥ १२ ॥

प्रथममन्तर्बलिं कुर्यात् द्वितीयं नन्दिदेवता ।
ध्वजादिबलिपीठान्तं बलिभोज्यक्रमं शृणु ॥ १३ ॥

उमास्कन्देश्वरं देवं ग्रामप्रदक्षिणं तथा ।
रथे वा शिबिकायां वा स्थापयेद्देवमेव वा ॥ १४ ॥

शङ्खघोषसमायुक्तं ब्रह्मघोषसमन्वितम् ।
सर्ववाद्यसमायुक्तं स्तोत्रमङ्गलवाचकैः ॥ १५ ॥

---

1. घोषः–
2. विधिः–
3. आचार्यः–

छत्राणां चामरौ चैव व्यजनं ध्वजमेव च ।
सर्वदीपसमायुक्तं यन्त्रदी[प]मनन्तरम् ॥ १६ ॥

सर्वभक्तजनानां तु ब्रह्मन् नृपतिमेव च ।
आचार्यो दक्षिणे पार्श्वे नृपतिर्वामपार्श्वके ॥ १७ ॥

मध्ये रुद्रकन्यायुक्तं गान्धर्वं तु शिवाग्रके ।
ग्रामप्रदक्षिणं कुर्यात् आस्थानमण्टपं तथा ॥ १८ ॥

पाद्यमाचमनं चार्घ्यं धूपदीपसमन्वितम् ।
आरात्रिकमर्चयेत् धीमान् भस्मदानं दापयेत् बुधः ॥ १९ ॥

दर्पणं चामरं चैव व्यजनं छत्रमेव च ।
भस्मं तु दापयेत् कुर्यात् नृपतिर्भक्तिजनान्वितः ॥ २० ॥

ना[रि]केलसमायुक्तं पनसं कदलीफलम् ।
निवेदयेत् हृदा मन्त्री ताम्बूलं तु निवेदयेत् ॥ २१ ॥

तद्दिनं तु समारभ्य यज्ञं[1] सप्तदिनं भवेत् ।
तद्दिनात् सप्तदिवसे तैलाभ्यञ्जनकर्मणि ॥ २२ ॥

आस्थानमण्टपं कुर्यात् गोमयालेपिते शुभे ।
शु . . . . . . . इति कारणे ॥ २३ ॥

प्रथमं अङ्कुरं चैव द्वितीयं वृषयात्रकम् ।
तृतीयं भेरिताडं च चतुर्थं[2] ग्रामप्रदक्षिणम् ॥ २४ ॥

ध्वजारोहणमेवं स्यात् पञ्चमे च नियोजयेत् ।
कौतुकं बन्धयेत् षष्ठे सप्तमं यागपूजनम् ॥ २५ ॥

---

1. यज्ञः–
2. तुर्यं–

अष्टमं होमकर्म[1] च नवमं ग्रामप्रदक्षिणम् ।
दशमं मण्डपशुद्ध्यर्थं प्रविशेदालयं प्रति ॥ २६ ॥

दिनं प्रति विशेषेण पूजाहोमबलिं ददेत् ।
ध्वजारोहावरोहान्तं पूजाहोमबलिक्रमात् ॥ २७ ॥

यानमुत्सवबेराणां यागद्वारे विशेषतः ।
पाद्याचमनधूपादीन् लाजान् श्रुतिष्टनान्[2] ददेत् ॥ २८ ॥

इति वातूलागमे चर्यापादः समाप्तः ॥

[P. 4045 O.R.I. Mss. Page 96-97].

—o—

---

1. कर्म–
2. श्रुतिदृष्टान्–

श्रीवातुलभेदे महामुखाख्ये

## शिवोत्सवविधिः

—o—

शिवोत्सवविधिं वक्ष्ये समासात् शृणु षण्मुख!
सर्वदुःखहरं पुण्यं सदा विजयवर्धनम् ॥ १ ॥

सर्वरोगविनाशार्थं सर्वभूतप्रियावहम् ।
ध्वजाङ्कुरार्पणं पूर्वं द्वितीयं चोत्सवं कुरु ॥ २ ॥

तीर्थाङ्कुरं तृतीयं तु त्रिविधं चोत्सवं कुरु ।
प्रथमं वृषयागं तु द्वितीयं केतुरोहणम् ॥ ३ ॥

तृतीयं भेरिघोषं[1] स्यात् बलिदानं चतुर्थकम् ।
पञ्चमं यागशालां च तीर्थाङ्कुरं तु षष्ठकम् ॥ ४ ॥

सप्तमं कौतुकारम्भं अष्टमं यागकर्मणि[2] ।
नवमं चोत्सवं प्रोक्तं दशमं परिवेषकम् ॥ ५ ॥

एकादशं रथारोहं द्वादशं मृगयात्रकम् ।
चूर्णोत्सवं ततः कुर्यात् तीर्थारम्भं चतुर्दशः[3] ॥ ६ ॥

पूर्णाहुतिं ततः कुर्यात् चण्डयागं तु षोडश[4] ।
ध्वजावरोहणं पश्चात् शुद्धस्नानमनन्तरम् ॥ ७ ॥

---

1. भेरीघोषं-
2. यागकर्म तु-
3. चतुर्दशम्-
4. षोडशम्-

गौरीयागं तदन्ते तु भक्तोत्सवमनन्तरम् ।
विशद्धेदमिति ख्यातं ज्ञात्वा कर्म समारभेत्[1] ॥ ८ ॥

नवाहं वाऽथ सप्ताहं पञ्चाहं त्र्यहं तु[2] वा ।
एकाहं वाऽथ वै वत्स! पञ्चधा भेद उच्यते ॥ ९ ॥

साकल्यं पावनं शान्तं माङ्गल्यं तु चतुर्विधम् ।
ध्वजोत्थानादितीर्थान्तं साकल्यं चेति कीर्तितम् ॥ १० ॥

वृषध्वजं विना वत्स! शेषं पूर्ववदाचरेत् ।
पावनं तत् समाख्यातं शान्तं स्यात् शृणु षण्मुख! ॥ ११ ॥

केचित् यदृच्छया वत्स! भक्त्या केचित्काले[3] शिवोत्सवम् ।
शान्तमेवं समाख्यातं माङ्गल्यं च ततः परम् ॥ १२ ॥

पूर्वाह्ने वाऽपराह्ने वा केवलं चोत्सवं कुरु ।
एतन्मङ्गलमित्युक्तं चतुर्थं परिपठ्यते ॥ १३ ॥

सौरं च सावनं चैव चान्द्रं नाक्षत्रमेव वा[4] ।
एते चतुर्विधे[5] मासे तीर्थोद्दिश्यं शिवोत्सवम् ॥ १४ ॥

मुक्तिदं चान्द्रमासे तु नाक्षत्रं पापनाशनम्[6] ।
प्रजावृद्धिकरं सौरं सावनं शान्तिदं स्मृतम्[7] ॥ १५ ॥

1. समारभेत–
2. एव–
3. 'काले' इति अधिकम्–
4. सौरश्चसावनश्चैव चान्द्रो नाक्षत्र एव वा–
5. एतच्चतुर्विधे–
6. मुक्तिदः चान्द्रमासे तु वा क्षत्रःपापनाशनः ।–
7. प्रजावृद्धिकरः सौरः सावनः शान्तिदः स्मृतः ॥–

अर्कचन्द्रमसोर्योगात् चान्द्रमि[1]त्यभिधीयते ।
पर्वे[2] चाथ चतुर्दश्यां षष्ठ्यष्टम्यन्तमेव वा ॥ १६ ॥

पर्वान्तसर्व[मा]से तु तीर्थान्तं कृष्णपक्षके ।
वैशाखे तु चतुर्दश्यां माघे षष्ठ्यन्तमेव वा ॥ १७ ॥

ज्येष्ठाष्ट्यन्तकं[3] वापि कारयेदुत्सवं ततः ।
पक्षयोरुभयोश्चैत्र कृष्णपक्षे विशेषतः ॥ १८ ॥

तिथिप्रधानतीर्थान्तं चान्द्रमि[4]त्यभिधीयते ।
मासे तु चोत्तमं[5] वत्स! पूर्णचान्द्रेण संयुतम्[6] ॥ १९ ॥

पुष्यान्तं पुष्यमासे तु माघमासे माघान्तकम्[7] ।
फाल्गुनेचोत्तरान्तं तु चित्रे चित्रान्तमेव वा ॥ २० ॥

वैशाखे चैव शूर्पान्तं मूलान्तं ज्येष्ठमासके ।
आषाढे चोत्तराषाढं श्रवणे वैष्णवान्तकम् ॥ २१ ॥

पूर्वाषाढं हि तन्मासेऽश्विनी चायुजे[8] तथा ।
कार्तिके कृत्तिकान्तं हि शिवान्तं मार्गशीर्षके ॥ २२ ॥

---

1. चान्द्र इ–
2. पर्वणि–
3. ज्येष्ठाष्टम्यन्तकं–
4. चान्द्र इ–
5. मासेषु चोत्तमः–
6. पूर्णच द्रेण संयुतः–
7. मघान्तकम्–
8. चाश्वयुजे–

तद्दिनात् पर्वयुक्तं तु श्रेष्ठं सामुद्रतीर्थकम् ।
एतद्दिन[1]विनापर्वं[2] तद्दिनात् पार्श्वरूक्षयोः (?) ॥ २३ ॥

रात्रियुक्ततिथिर्यावत् सा तिथिश्चेति निश्चयः ।
दानं प्रदक्षिणं होमं तीर्थं सामुद्रकं तथा ॥ २४ ॥

तत्काले तु विशेषेण कारयेत् सर्वसम्पदम् ।
तीर्थं नदीतटं चेत्तु विना पर्वं[3] समाचरेत् ॥ २५ ॥

मासनक्षत्रमेवोक्तं उत्सवं तत्[4] प्रशस्यते ।
भास्करस्य गतिर्यावत् राशौ राशौ तु षण्मुख ! ॥ २६ ॥

सङ्क्रान्तिमिति[5] विख्यातं[6] सौरमासं तदेव हि[7] ।
पूर्वाह्ने वाऽथ मध्याह्ने अपराह्ने प्रदोषके ॥ २७ ॥

अर्धरात्रेऽथ रात्रान्ते सङ्क्रमं[8] सम्भवेद्यदि ।
तत्काले तीर्थमारभ्य (?) तत्तीर्थं सर्वसम्पदम् ॥ २८ ॥

सौरमासोत्सवं प्रोक्तं[9] सर्वारिष्टनिवारणम्[10] ।
राजाभिषेक[11]दीक्षान्ते जन्मान्ते वा लयान्तके ॥ २९ ॥

---

1. एतद्दिनं–
2. पर्व–
3. विना पर्व–
4. उत्सवः सः–
5. सङ्क्रान्तिरिति–
6. विख्याता–
7. सौरमासः स एव हि–
8. सङ्क्रमः–
9. सौरमासोत्सवः प्रोक्तः–
10. निवारणः–
11. मिषेके–

युद्धारम्भदिनान्ते[1] वा यजमानदिनान्तके ।
देवतास्थापनान्ते वा[2] ग्रामारम्भान्तमेव वा[3] ॥ ३० ॥

तेषु जन्मत्रयं वापि तीर्थार्थे[4] सम्प्रशस्यते ।
सावनं चोत्सवं ज्ञेयं[5] साप्रतिष्ठोत्सवं[6] गुह ! ॥ ३१ ॥

आर्द्रान्तं वैष्णवान्तं वा रोहिण्यान्त[7]मथापि वा ।
सर्वमासेषु कर्तव्यं[8] मुत्युत्सवमिति स्मृतम्[9] ॥ ३२ ॥

ग्रामारिष्टं तथा वत्स ! मासे चैकैकमेव तु ।
मासे मासे तथा न्यूनं अधिके सममेव वा ॥ ३३ ॥

ज्ञात्वा परिहरेद्वत्स ! तीर्थर्क्षं निश्चितं सह ।
तीर्थर्क्षद्वौ तु सम्प्राप्तौ[10] चैकमासे परं परम्[11] ॥ ३४ ॥

नष्टं तु प्रथमं रूक्षं[12] . . र्क्षं (?) तीर्थमुच्यते ।
कृतं चेत् पूर्वनक्षत्रे तत्कर्ता वास्तु नश्यति ॥ ३५ ॥

---

1. दिनेऽन्ते–
2. स्थापनेऽन्ते वा–
3. रम्भेऽन्त एव वा–
4. तीर्थर्क्षे–
5. सावनश्चोत्सवो ज्ञेयः–
6. स प्रतिष्ठोत्सवः–
7. रोहिण्यन्त–
8. कर्तव्यः–
9. उत्सव इति स्मृतः–
10. तीर्थर्क्षे द्वे तु सम्प्राप्ते–
11. परं वरम्–
12. ऋक्षम्–

तस्मात् सर्वप्रयत्नेन तीर्थमन्त्यर्क्षके विदुः ।
अंशके सप्तमातीते राशौ राशौ तु भास्करः ॥ ३६ ॥

मासाग्रस्य फलं कुर्यात् ज्ञात्वैवं चोत्सवं कुरु ।
ध्वजोत्थानादितीर्थान्तं एकमासे परं परम्[1] ॥ ३७ ॥

यागारम्भान्तमध्ये स्यात् अन्ते तीर्थाधमं भवेत् ।
पूर्वाह्णे चोत्तमं तीर्थं मध्याह्ने मध्यम[2] भवेत् ॥ ३८ ॥

अपराह्णे . . . यात्रान्ते तत्तीर्थं चाधमं भवेत् ।
अर्धनक्षत्र[3]यत्पूर्वं (?)तत्तीर्थं तीर्थमुत्तमम् ॥ ३९ ॥

तीर्थनक्षत्रयन्मध्ये(?) तत्तीर्थं तीर्थमध्यमम् ।
तीर्थरुक्षा[4]वसाने तु तत्तीर्थं चाधमं भवेत् ॥ ४० ॥

द्विवारे खण्डरिक्षं[5] चेत् अन्त्यर्क्षे तीर्थमाचरेत ।
एकाहमुत्सवं शैवं[6] त्रियाहं गौणमुच्यते[7] ॥ ४१ ॥

पञ्चाहं भूतिकं प्रोक्तं[8] सप्ताहं भावनं स्मृतम्[9] ।
नवाहं दैविकं प्रोक्तं[10] श्रीकरं द्वादशाहकम्[11] ॥ ४२ ॥

---

1. परं वरम्–
2. मध्यमं–
3. तीर्थनक्षत्र–
4. तीर्थऋक्षा–
5. ऋक्षं चेत्–
6. एकाह उत्सवः प्रोक्तः–
7. त्र्यहः गौण उच्यते–
8. पञ्चाहो भौतिकः प्रोक्तः–
9. सप्ताहो भावनः स्मृतः–
10. नवाहो दैविकः प्रोक्तः–
11. श्रीकरो द्वादशाहकः–

एकविंशदिनं[1] रौद्रमेते[2] सप्तविधा भवेत्[3] ।
एकाहं ग्रामरक्षार्थं[4] त्रियाहं लोकपावनम्[5] ॥ ४३ ॥

पञ्चाहं भूतरक्षार्थं[6] सप्ताहं जन्तुपालनम्[7] ।
नवाहं देवताप्रीतिः[8] द्वदशाहमभूत् प्रियम्[9] ॥ ४४ ॥

एकादशाहमेवोक्तं[10] लोकपालप्रियं[11] भवेत् ।
प्रतिसंवत्सरं मासं तिथिं निश्चित्य ऋक्षयुक्[12] ॥ ४५ ॥

पुरा शब्दोत्सवो[13]हीने यथेष्टे मासि वा नयेत् ।
उत्तमं मध्यमं चैव[14] कन्यसंत्रिविधं[15] भवेत् ॥ ४६ ॥

---

1. विंशद्दिनं–
2. रौद्र एते–
3. भवेयुः–
4. एकाहो ग्रामरक्षार्थः–
5. त्र्यहः लोकपावनः–
6. पञ्चाहो भूतरक्षार्थः–
7. सप्ताहो जन्तुपालनः–
8. नवाहो देवताप्रीत्यै–
9. द्वादशाः अभूत् प्रियः–
10. एकादशाह एवोक्तः–
11. प्रियः–
12. ऋक्षयुजम्–
13. त्सवे–
14. उत्तमो मध्यमश्चैव–
15. कन्यसः त्रिविधः–

उत्सवं[1] नवधा प्रोक्तं[2] प्रत्येकं क्रमशो विदुः ।
यदि स्यात् तीर्थनक्षत्रे व्यत्यासोऽत्र प्रकीर्तिताः[3] ॥ ४७ ॥

यानारम्भस्य पूर्वे तु व्यत्यासो ज्ञायते यदि ।
अङ्कुरार्पणपूर्वे तु कारयेदुत्सवं ततः ॥ ४८ ॥

प्रायश्चित्तं च कर्तव्यं शान्तिहोमं समाचरेत् ।
ध्वजदण्डहतावेशो ध्वजोवारोपणं ततः (?) ॥ ४९ ॥

अवरोप्य ध्वजं पश्चात् वृषयागं समाचरेत् ।
अतीते तीर्थनक्षत्रे ज्ञात्वैवं हि षडानन ! ॥ ५० ॥

समाप्य तीर्थमन्यत्र उत्सवं पुनरारभेत्[4] ।
एकोत्सवविधानेन आर्द्रान्तं तीर्थमाचरेत् ॥ ५१ ॥

शिवोत्सवारम्भकाले नेष्टमन्योत्सवं[5] गुह !
अन्यदेवोत्सवे काले महादेवोत्सवं कृतम्[6] ॥ ५२ ॥

पूरारब्धान्यदेवानां उत्सवं च[7] न दोषभाक् ।
शिवयागं चान्ययागं उक्तकाले कृतं यदि[8] ॥ ५३ ॥

---

1. उत्सवः–
2. प्रोक्तः
3. व्यत्यासोऽत्र प्रकीर्त्यते–
4. रारभेत–
5. नेष्टः अन्योत्सवः ।
6. महादेवोत्सवः कृतः ।
7. उत्सवश्च ।
8. शिवयागश्चान्ययागः ।
   उक्तकालेकृतो यदि–

विफलं तदवाप्नोति एकस्मिन्नेकवास्तुनि ।
ध्वजाद्ध्वजं न कर्तव्यं कर्तव्यं वृषभध्वजम्[1] ॥ ५४ ॥

देवकल्याणकाले तु नृकल्याणं न कारयेत् ।
कारयेद्यदि मोहेन व्याधिशोकभयं भवेत् ॥ ५५ ॥

नगरे पत्तने वत्स! राजधानीं[2] तथैव च ।
सर्वदेवोत्सवं कुर्यात दोषो नात्र भविष्यति ॥ ५६ ॥

त्रिविधं तूत्सवारम्भं कारयेत्तु विचक्षणः ।
अङ्कुरार्पणपूर्वं च[3] भेरीघोषणपूर्वकम्[4] ॥ ५७ ॥

ध्वजारोहणपूर्वं च त्रिविधं तदुदाहृतम्[4] ।
अङ्कुरार्पणपूर्वं च[6] सर्वसम्पत्समृद्धिदम्[7] ॥ ५८ ॥

भेरीताडनपूर्वं च[8] देवतानां प्रियावहम्[9] ।
ध्वजारोहणपूर्वं चेत्[10] सर्वप्राणिसुखावहम्[11] ॥ ५९ ॥

---

1. ध्वजाद्ध्वजो न कर्तव्यः कर्तव्यो वृषभध्वजः ।
2. राजधान्यां–
3. पूर्वश्च–
4. पूर्वकः–
5. ध्वजारोहणपूर्वश्च त्रिविधःसउदाहृतः–
6. पूर्वश्च–
7. समृद्धिदः–
8. पूर्वश्च–
9. प्रियावहः–
10. पूर्वश्चेत्–
11. सुखावहः–

अङ्कुरप्रथमारम्भं[1] भेरीघोषं[2] तदन्तरम्[3] ।
ध्वजमारोपयेत्पश्चादङ्कुरार्पणपूर्वकम् ॥ ६० ॥

एतदुत्सवमारभ्य चोत्सवस्य दिनादितः ।
भेरीं रात्रौ तु सन्ताड्य ध्वजं पश्चात्तु लोपयेत् ॥ ६१ ॥

अङ्कुरार्पणयेत्पश्चात्[4] भेरीताडनपूर्वकम् ।
वध्याह्ने ध्वजमारोप्य तद्रात्रौ भेरी[5]घोषणम् ॥ ६२ ॥

उत्सवारम्भरात्रौ तु तीर्थाङ्कुरं समाचरेत् ।
ध्वजमारोपणं[6] पूर्वं प्रोक्तमेवं षडानन! ॥ ६३ ॥

तीर्थं तु श्रावयेद्वत्स! देशिकः प्रीतमानसः ।
रात्रौ चैवोत्सवारम्भं प्रातःकाले समाचरेत् ॥ ६४ ॥

पुष्कलं विजयं सौख्यमुत्सवं त्रिविधं भवेत्[7] ।
पुष्कलं मुक्तिदं प्रोक्तं विजयं तु जयप्रदम्[8] ॥ ६५ ॥

सौख्यं तु सुखदं ज्ञेयमेवमेवं[9] विधीयते ।
पुष्कलं च[10] समासेन पूर्वरात्राधिवासयेत् ॥ ६६ ॥

---

1. मारम्भः–
2. घोषः–
3. अनन्तरम्–
4. रानर्पयेत्पश्चात्–
5. भेरी–
6. स्यारोपणम्–
7. पुष्कलो विजयः सौख्यः उत्सवः त्रिविधो भवेत्–
8. पुष्कलो मुक्तिदः प्रोक्तः विजयस्तु जयप्रदः–
9. सौख्यस्तु सुखदोज्ञेयः एवमेवं–
10. पुष्कल[illegible]–

पक्षश्चैव ऋतुश्चैव हरिभे[1] च मनुस्तथा ।
स्मृतिं चैव[2] विशेषेण दिनपानां विधीयते ।। ६७ ।।

निर्दिष्टदिवसाद्रात्रिमारभेदुत्सवं[3] ततः ।
व्योमवेदाश्च विद्येशाः सूर्यश्चैव तु षोडशः ।। ६८ ।।

बलिसङ्ख्य इति ज्ञेयं बलिमुख्यं प्रकीर्तितम्[4] ।
निर्दिष्टदिवसात्पूर्वमारभेत्पूर्वे[5]रात्रिके ।। ६९ ।।

तुर्या नागाश्च सूर्याश्च षोडशश्चैव विंशतिः ।
तिथिप्रधानमेवं हि बलिसङ्ख्याः प्रकीर्तिताः ।। ७० ।।

वृषयागं समारभ्य पूर्वरात्रौ विशेषतः ।
सद्योऽधिवासनं वापि कारयेद्विधिना ततः ।। ७१ ।।

प्रथमं वृषमालिख्य द्वितीयं नयन[6]मोचनम् ।
जलाशयस्तृतीयं[7] स्यात्प्रोक्षणं तु चतुर्थकम् ।। ७२ ।।

पञ्चमं शयनारम्भं[8] षष्ठं कुम्भाधिवासनम् ।
सप्तमं तु कलान्यासं[9] अष्टमं होमकर्मणि[10] ।। ७३ ।।

---

1. हरिभं ।
2. स्मृतिश्चैव ।
3. रभेतोत्सवं ।
4. बलिसंख्या इति ज्ञेय बलिर्मुख्यः प्रकीर्तितः ।
5. रभेत पूर्व ।
6. नेत्र ।
7. स्तृतीयः ।
8. पञ्चमः शयनारम्भः ।
9. सप्तमस्तु कलान्यासः ।
10. कर्म तु ।

नवमं प्रतिसरं कुर्याद्दण्डसंस्थापनं वरम् ।
घृतं शिरार्पणं पश्चाद्ग्रामभ्राममतः परम्[1] ॥ ७४ ॥

पूर्णाहुतिं ततो दद्यात्पुण्याहं कारयेद्बुधः ।
ध्वजमारोपयेत्पश्चात्पूजयेत्तदनन्तरे[2] ॥ ७५ ॥

एवं ध्वजक्रमं प्रोक्तं कारयेत्तु शिखिध्वजम्[3] ।
वृषाग्रे वा शिवाग्रे वा स्थण्डिलं कारयेत्ततः ॥ ७६ ॥

अष्टद्रोणैस्तदर्धैर्वा तदर्धैश्शालिना[4] कुरु ।
धान्यार्धतण्डुलोपेततण्डुलार्धतिलादपि[5] ॥ ७७ ॥

दर्भैः पुष्पोपशोभाढ्यैः पूजयेद्गन्धपुष्पकैः ।
ध्वजपटं नवहस्तं सप्तषट्हस्तमेव वा ॥ ७८ ॥

प्रासादतारमानं वा गर्भमानसमं तु वा ।
द्वारोर्च्चं[6] वाऽथ कर्तव्यमुत्तमादिक्रमेण तु ॥ ७९ ॥

उपनादुत्तरान्तं वा पादग्राह्यसमं तु वा ।
एवमुत्समानं तु विस्तरं शृणु षण्मुख ! ॥ ८० ॥

आयतं ऋतुभागैकं भागं विस्तारमुच्यते[7] ।
लम्बनं तत्समं प्रोक्तं द्वित्रिप्रथमथापि वा ॥ ८१ ॥

---

1. वरम् ।
2. दनन्तरम् ।
3. शिखिध्वज !
4. शालिभिः ।
5. तिलैरपि ।
6. द्वारोच्चं ।
7. भागो विस्तार उच्यते ।

पार्श्वे कद्लिकाकारं प्रभार्थं शिखराकृतिम् ।
कर्णाग्रे चैव पुच्छाग्रे किङ्किणी[1]रुपशोभितम् ।। ८२ ।।

श्वेतः रक्तं तथा पित्तं कृष्णं चेति चतुर्विधम् ।
ब्राह्मणादिक्रमेणैव ध्वजानां वर्णमुच्यते[2] ।। ८३ ।।

मुखं पादं च पृष्ठं च ज्ञात्वा मध्ये वृषं लिखेत् ।
अधोभागमुखं ज्ञेय ऊर्ध्वभागं तु पृष्ठता[3] ।। ८४ ।।

अधोभाग[4]वृषं कुर्याद्देशिकः शिल्पिभिः सह ।
दैवज्ञेन समायुक्तं[5] मूहूर्तं तं निरीक्षयेत् ।। ८५ ।।

राज्यग्रामानुकूलर्क्षे लेखयेच्छिवसन्निधौ ।
वर्णानि सङ्गृहीत्वा[6] तु पृथक् पात्रे विचक्षणः ।। ८६ ।।

शङ्खवै[7] राजतं वापि गैरिकं ताटलिङ्गकम् ।
श्यामं च पञ्चधा ज्ञेयं[8] जलेनालोड्य यत्नतः ।। ८७ ।।

वर्णसंस्कारवत्कृत्वा[9] शिल्पशास्त्रे विचक्षणः ।
हेमतूलिकया युक्तं लेखयेच्छिल्पवत्तमः[10] ।। ८८ ।।

---

1. किङ्किणीभि ।
2. वर्णउच्यते ।
3. अधोभागोमुखंज्ञेयः ऊर्ध्वभागस्तुपृष्ठतः ।
4. भागे ।
5. समायुक्तः ।
6. वर्णान् सङ्गृह्य ।
7. शाङ्खं वै ।
8. ज्ञातं ।
9. रवन्तंकृत्वा ।
10. शिल्पिवित्तमः ।

वृषध्वजं न्यसेन्मध्ये परितस्त्वन्यकेतुना ।
पूर्वाग्रे चोत्तराग्रे च कृत्वा सर्वं समालिखेत् ॥ ८९ ॥

लिङ्गनाहं च पीठं च गर्भमानं तथैव च ।
अन्याधिष्ठानमानं च प्र . . ग्रीवमानकम् ॥ ९० ॥

नाभिकास्तु विमानं च यजमानवशेन वा ।
मानधर्मविधि[1] ज्ञेयमिष्ट[2]मानेन कारयेत् ॥ ९१ ॥

अल्पं वा महतिं[3] वाऽपि ज्ञात्वा लिङ्गवशाद्विदू[4] ।
अल्प[5]लिङ्गस्य चोत्सेधं द्विगुणत्रिगुणवृद्धिदम् ॥ ९२ ॥

वृषोत्तुङ्गाधमं मध्यचोत्तमं ? च शिखिध्वजम्[6] ।
दैविके गाणवे लिङ्गे चापि बाणादिलिङ्गके ॥ ९३ ॥

लिङ्गान्यं चोन्नतस्तस्याः पीठमानेन वा कुरु । ?
यदि दैविकमानुष्यमूलं वा दिव्यमेव वा ॥ ९४ ॥

पूजाभागस्य नाहार्थं[7]मुत्सेधार्धमथापि वा ।
तदुच्चं[8] वसुधा कृत्वा सप्तांशं मध्यमं भवेत् ॥ ९५ ॥

---

1. विधिः–
2. ज्ञेय इष्ट–
3. महतीं–
4. द्विदुः–
5. अल्पं–
6. शिखिध्वज!–
7. नाहार्धं–
8. तदुच्चं–

अधमं चैकभागेन त्रिधा मानं प्रशस्यते ।
रसांशमधमं प्रोक्तं पूजभागस्य [1] मानकम् ॥ ९६ ॥

हरिहरस्योदयं मानं द्विजभागयुतोऽपि वा । ?
त्रिभागमुत्तमं प्रोक्तं द्विभागं मध्यमं भवेत् ॥ ९७ ॥

अधमं चैकभागेन त्रिधा मानं प्रशस्यते ।
लिङ्गपीठस्य भागार्धं मानेनैवोत्तमं विदुः ॥ ९८ ॥

तस्यार्धमधमं ज्ञेयं त्रयो[2]र्मध्येष्टभाजिके ।
अधमादीनि चोत्तुङ्गनाहमानेन षण्मुख ! ॥ ९९ ॥

पीठकार[3]समं मानमुत्तुङ्गं तत्प्रशस्यते ।
तथैव तुङ्गमानेन कारयेद् वृषमानकम् ॥ १०० ॥

सकलानां विशेषेण तत्तदुच्छ्रायदुच्छ्रितम् [4] ।
पीठामहत्तरां चेत्तु तुङ्गमानेन कं[5] कुरु ॥ १०१ ॥

अल्पं चेन्नाविमानेन ? कारयेदेकमेव तु ।
गर्भिणां भूतभावैकं भागमानोदयं वृषम् ॥ १०२ ॥

. . . ध्राष्टधा भज्ये[6] नवधा मानमिष्यते ।
प्रस्तरोदयमानं वा गळोदयसमं तु वा ॥ १०३

---

1. पूजाभागस्य-
2. तयो-
3. पीठाकार-
4. मुच्छ्रितम्-
5. तं-
6. भङ्क्त्वा-

शिखरोर्ध्वस्फूपितुङ्गं वा नासितारार्धमेव वा ।?
अल्पं वा महतिं[1] मानं ज्ञात्वा हर्म्यवशाद् वृषम् ॥ १०४ ॥

ध्वजताराष्टधा भज्य षडंश[2] मध्यमो भवेत् ।
द्वयांशं[3] पार्श्वयोर्नीत्वा वृषमध्ये समालिखेत् ॥ १०५ ॥

खुरादिमस्तकान्तं यद्वृषोच्च[4]मिति भाषितम् ।
तारं तुङ्गसमं ज्ञेयं तारार्धं तस्य लाङ्गलम्[5] ॥ १०६ ॥

मस्तकं मध्यमं ज्ञात्वा मुखान्तं सूत्रमर्पयेत् ।
यानकं शयनं वाऽपि स्थानकं वाऽपि कारयेत् ॥ १०७ ॥

यानं मनोरथं ज्ञेयं शयनं सुखदं स्मृतम् ।
स्थानकं शान्तिदं प्रोक्तं त्रिविधं परिभाषितम् ॥ १०८ ॥

शिवस्याभिमुखं कुर्यादुत्तराग्रं षडानन! ।
लब्धमानेन चोत्सेधं भूतभागेन भाजयेत् ॥ १०९ ॥

मुखमेकेन कर्तव्यं ग्रीवमर्धांशमेव वा ।
तत्समं पीठकं वत्स! गुणांशं पृष्ठमुच्यते ॥ ११० ॥

उक्षायाममिदं प्रोक्तं[6] चतुर्यांशं ततः कुरु ।
नेत्रं द्व्यङ्गुलेनैव भ्रुवोर्बाणाङ्गुलं मतम् ॥ १११ ॥

---

1. महतीं–
2. भक्त्वा षडंशं–
3. द्वयांशं–
4. वृषोच्च–
5. लाङ्गूलम्–
6. यामस्त्वयं प्रोक्तः–

नासासुषिरमङ्गुल्यं तस्यान्तरं चतुर्थकम् ।
तस्य देवस्य चोत्सेधमर्धा[1]ङ्गुलमिति स्मृतम् ॥ ११२ ॥

तत्तारं चतुरङ्गुल्यं दन्तमष्टाङ्गुलं[2] भवेत् ।
अधरोष्ठस्य विस्तारं त्र्यङ्गुलं तदुदीरितम्[3] ॥ ११३ ॥

उत्तरोष्ठस्य विस्तारं तदेवं परिकल्पयेत् ।
श्टङ्गमूलं तु विस्तारं त्र्यङ्गुलं तु[4] भवेद्गुह ! ॥ ११४ ॥

श्टङ्गद्वयस्य मध्ये तु तारं षडङ्गुलेन तु ।
सप्ताङ्गुलं तदुत्सेधं[5] किञ्चिद्वक्रमथान्तरे ॥ ११५ ॥

श्टङ्गाग्रस्यान्तरं वत्स ! गणाङ्गुलमुदीरितम् ।
शृङ्गात्कर्णान्तरं प्रोक्तं व्योमाङ्गुलं तु मानतः ॥ ११६ ॥

वेदाङ्गुलं कर्णतारं कर्णपालिचतुष्टयम् ।
पञ्चाङ्गुलेन कर्णोच्चं गुणाङ्गुलं सुषिरं स्मृतम् ॥ ११७ ॥

कर्णनेत्रान्तरं मध्ये चतुरङ्गुलमानतः ।
पट्टिकैकाङ्गुलं तारं मूलभागे तु सप्तकम् ॥ ११८ ॥

पीठकोच्चयं[6] तदेवं स्यात्कुण्डलि चैव वृत्तवत् ।
उक्षायामसमं कुक्षितारं तत्प्रतिपद्यते ॥ ११९ ॥

---

1. उत्सेधोऽर्धा–
2. दन्तः अष्टाङ्गुलः–
3. विस्तारः त्र्यङ्गुलः स उदीरितः–
4. शृङ्गमूलस्यविस्तारःत्र्यङ्गुलस्तु–
5. सप्ताङ्गुलस्तदुत्सेधः–
6. पीठकोच्चं–

पूर्वजङ्घस्य[1] दैर्ध्यं तु सप्तविंशाङ्गुलं[2] भवेत् ।
जानूरुद्वयमङ्गुल्यमपजङ्घा तु तत्समम् ॥ १२० ॥

अपरं चतुरङ्गुल्यमेवमेव क्रमेण तु ।
उक्षायामं तु[3] वै वत्स ! पञ्चदशाङ्गुलं[4] भवेत् ॥ १२१ ॥

वृषणं चतुरङ्गुल्यं[5] द्व्यङ्गुलं नाभिकुण्डलि ।
एवं लक्षणमाख्यातं वृषभस्य शिखिध्वज ! ॥ १२२ ॥

शङ्खवर्णनिभं देहं श्टङ्गौ चापो मसप्रमभम्[6] ? ।
डाडिमी[7]कुसुमप्रख्यं श्रोत्रयोरुभयोरपि ॥ १२३ ॥

सितकृष्णद्विनेत्रं स्याद्भ्रुवो मञ्जरसन्निभौ[8] ।
आस्यमङ्घ्रितलं बीजं वृषणं खुरमेव च ॥ १२४ ॥

जपापुष्पनिभाकारमङ्गुलं पिङ्गसन्निभम् ।
अङ्गुलाग्रातिकृष्णं स्यादेवमालिख्य बुद्धिमान् ॥ १२५ ॥

जान्वौ तु[9] नूपुरच्छन्नं[10] ग्रीवे चामरलम्बितम्[11] ।
किङ्किणीमूलमाभूष्य ? करे घण्टावलम्बितम् ॥ १२६ ॥

---

1. जङ्घायाः–
2. सप्तविंशत्यङ्गुलं–
3. उक्षायामस्तु–
4. पञ्चदशाङ्गुलः–
5. वृषणः चतुरङ्गुलः–
6. शृङ्गे चापसमप्रभे–
7. दाडिमी–
8. भ्रुवौ मञ्जरसन्निभे–
9. जानुनी–
10. च्छन्ने–
11. ग्रीवात्वामरलम्बिता–

मध्ये शिवासनं वाऽपि लिङ्गं वा शूलमेव वा ।
आर्षेवा दैविके वाऽपि कारयेद्देवमेव तु ॥ १२७ ॥

अन्यलिङ्गानि चै[1] वत्स ! केवलं वृषभं कुरु ।
अष्टमङ्गलरूपाणि परितः कल्पयेत्क्रमात् ॥ १२८ ॥

वृषोच्च द्वे वा भागैकं भागं कुर्याद्वृषासनम् । ?
दले षोडशभिर्युक्ते कर्णिकाकेसरैर्युतम् ॥ १२९ ॥

द्विपार्श्वे चामरौ दीपौ पूर्णकुम्भं तु वामके ।
अद[2]श्चोर्ध्वं लिखेद्विद्वान् लक्षणेन समन्वितम् ॥ १३० ॥

नासावर्णसमायुक्तं पुन्नागं कुसुमं[3] लिखेत् ।
युगलोचनरिक्षं तु कारयेन्नेत्रमोचनम् ॥ १३१ ॥

त्रिमूर्त्यायतनं ते तु हंसं तार्क्ष्यं वृषं लिखेत् ।
ऊर्ध्वे तु वृषमालिख्य कल्पयेत्तु विशेषतः ॥ १३२ ॥

प्रधानध्वजमेवोक्तमन्येषां केवलं वृषम् ।
अष्टदिग्ध्वजमारोप्य दैविके तु षडानन ! ॥ १३३ ॥

लोकपालकलिङ्गं चेत्प्रधानं वृषभध्वजम् ।
पावकाद्देवपर्यन्तं लोकेशावाहनान् लिखेत् ॥ १३४ ॥

शिल्पिकर्म विसृज्याथ दक्षिणां दापयेत्ततः ।
प्रोक्षयेद्गन्धतोयेन लम्बकूर्चोपरि न्यसेत् ॥ १३५ ॥

---

1. चेत्–
2. अध–
3. पुन्नागकुसुमं–

चन्दनं चाक्षतं पुष्पं तैलचूर्णं ददेत्क्रमात्[1] ।
जलाशयं तु सङ्कल्प्य शिवाग्रे स्थण्डिलोपरि ॥ १३६ ॥

दर्पणं विन्यसेन्मध्ये यदृच्छान्वितं गुह ! ? ।
यामं यामार्धसूत्रं तु विन्यसेत्तु जलाशये ॥ १३७ ॥

जलादुत्तीर्ययामान्ते वृषयागं समाचरेत् ।
ब्रह्मजज्ञानमन्त्रेण विन्यसेदङ्घ्रिदेशके ॥ १३८ ॥

इदं विष्णिवतिमन्त्रेण वृषस्य उपरि न्यसेत् ।
त्रियम्बकेन मन्त्रेण वृषपृष्ठे तु विन्यसेत् ॥ १३९ ॥

आपो हि ष्ठेति मन्त्रेण लाङ्गूलाग्रे तु विन्यसेत् ।
विश्वतश्चक्षुरित्युक्तं[2] विन्यसेच्चक्षुमध्यमे ? ॥ १४० ॥

प्रणवेन समायुक्तं हृदयं चास्त्रकौतुकम् ।
तीक्ष्णशृङ्गाय विद्महे शिरसा सह योजयेत् ॥ १४१ ॥

चूलिको वेदपालाय धीमहि कवचस्तथा ।
नेत्रं तन्नो वृषश्चेति प्रचोदयादस्त्रमन्त्रतः ॥ १४२ ॥

षडङ्गान्[3] हृदयादीनि विन्यसेत्तु विचक्षणः ।
पञ्चविंशतितत्त्वानि विन्यसेत्तु तदन्तिके ॥ १४३ ॥

गन्ध[4]पुष्पं तथा धूपं दीपं नैवेद्यकं ददेत्[5] ।
वृषगायत्रिमुच्चार्य विन्यसेद्वृषकुम्भके ॥ १४४ ॥

1. दद्यात् क्रमात्–
2. रित्युक्ता–
3. षडङ्गानि–
4. गन्धं–
5. दद्यात्–

उक्षं[1] पूर्वघटे न्यस्य श्टङ्गिणं दक्षिणे तथा ।
नन्दि[2] वारुणदिग्भागे वेदपादं तथोत्तरे ॥ १४५ ॥

पावके गोपतिं चैव उग्रशृङ्गं तु राक्षसे ।
वायव्ये वृषनाथं तु ब्रह्मोदरं चैशके घटे ॥ १४६ ॥

तार्च्यगायत्रि[3]मुच्चार्य मध्यकुम्भे तु विन्यसेत् ।
तार्क्ष्यं पूर्वघटे न्यस्य गरुडं दक्षिणे घटे ॥ १४७ ॥

वारुणे स्वर्णपक्षं तु वैनतेयं तथोत्तरे ।
आग्नेय्यां सर्पहारी च गरुत्मा चैव नैरुरुते[4] ॥ १४८ ॥

वायव्यां नागहारी च[5] विषाशनं चैषके घटे ।
हंसशुचीति मन्त्रेण हंसकुम्भं तु विन्यसेत् ॥ १४९ ॥

विहङ्ग[6]पूर्वकुम्भे तु वेदमाता तु[7] पावके ।
वेदविद्दक्षिणे[8] भागे पक्षिराजस्तु[9] नैरुरुते ॥ १५० ॥

वारुणे तु घटे विद्वान् तुण्डशीर्षं तुमेव च[10] ।
मारुते तु घटे वत्स! ब्रह्मवाहनमेव च ॥ १५१ ॥

---

1. उक्षाणं–
2. नन्दिनं–
3. तार्क्ष्यगायत्री–
4. दर्पहारिणं गरुत्मन्तं नैर्ऋते–
5. नागहारिणं–
6. विहङ्गं–
7. वेदमातरम्–
8. वेदविदं दक्षिणे–
9. पक्षिराजं–
10. तमेव च–

शुकवाहं तथा सौम्य[1]! हंसरूपं तथैशके ।
एकैकमावृता नष्टा? कुम्भान् कुम्भेषु विन्यसेत् ॥ १५२ ॥

ग्रहादीन् पूर्ववत्कुर्याद्देशिकेन विचक्षण[2] ।
देवतामण्टपे वाऽपि वाहना[3]मण्टपेऽपि वा ॥ १५३ ॥

गोमयालेपनं कुर्यात्प्रोक्षयेदस्त्रमन्त्रतः ।
स्थण्डिलं शालिना कुर्यादेकैकं तु पृथक् पृथक् ॥ १५४ ॥

नवध्वजं चोत्तमं ज्ञेयमष्टकेतुं च मध्यमे[4] ।
अधमं ध्वजमेकं स्याद्यथावित्तानुसारतः ॥ १५५ ॥

मद्यादीशान[5]पर्यन्तं स्थण्डिलं नव कल्पयेत् ।
द्रोणतोयेन सम्पूर्णान् कुम्भान् बिम्बसमप्रभान् ॥ १५६ ॥

तन्तुना चित्रितान् सर्वानेकद्वित्रिय[6]तन्तुभिः ।
नवकुम्भान् सुसंस्थाप्य परं प्रति विशेषतः ॥ १५७ ॥

अष्टदिक्षु ध्वजं चेत्तु मध्ये वृषभदैवतम् ।
परितोऽष्टघट[7] न्यस्त्वा वृषविघ्नेश्वरान् क्रमात् ॥ १५८ ॥

त्रिमूर्त्यायतनं चेत्तु स्थण्डिलत्रितयं भवेत् ।
वृषकुम्भं न्यसेन्मध्ये वैनतेयं तु दक्षिणे ॥ १५९ ॥

---

1. सौम्ये-
2. विचक्षणः-
3. वाहन-
4. अष्टकेतु च मध्यमम्-
5. मध्यादीशान-
6. नेकद्वित्रैः-
7. घटान्-

उत्तरहंसकुम्भं[1] स्यात्तद्विधेशकुम्भकान् ।
स्थण्डिलं? पश्चिमे भागे ध्वजं तस्योपरि न्यसेत् ॥ १६० ॥

ससूत्रान् सापिधानांश्च गन्धाद्यैरर्चयेत्क्रमात् ।
धूपदीपं ददेत्पश्चान्नैवेद्यं दापयेत्क्रमात् ॥ १६१ ॥

नैवेद्यं पायसं गौश्यं मुद्गां[2] सम्पादयेत्पृथक् ।
पूजयेत्तु विशेषेण ततो होमं समारभेत्[3] ॥ १६२ ॥

पञ्चाग्नि[4] वा तथैकाग्नि कल्पयेत्कल्पवित्तमः ।
पञ्चाग्नि[5] चेच्चतुर्दिक्षु प्रधानं चैशदेशके ॥ १६३ ॥

एकाग्निं चेद्विशेषेण पूर्वे वा चैषकेऽपि वा ।
अग्निकार्योक्तमार्गेण वृषाग्निं परिकल्पयेत् ॥ १६४ ॥

समिदाज्यचरुं मुद्गतिलसर्षपकान् यवान् ।
वृषगायत्रिमन्त्रेण प्रत्येकं पञ्चविंशति[6] ॥ १६५ ॥

हुत्वा हुत्वा तु वै वत्स! स्पर्शाहुतिमथाचरेत् ।
मूर्तिगायत्रिमुच्चार्य हुत्वा चैकैकमाहुतिः[7] ॥ १६६ ॥

---

1. उत्तरे हंसकुम्भः–
2 गौल्यं मुद्गं–
3. समारभेत–
4. पञ्चाग्नीन्–
5. पञ्चाग्नीन्-
6. पञ्चविंशति–
7. एकैकामाहुतिं–

वृषाङ्गं तु हुनेत्पश्चा[1]ज्जयादीन्[2] तत्र हूयते ।
अग्न्याधानं हुनेत्पश्चाद्राष्ट्रभृच्च हुनेत्पुनः ॥ १६७

गरुडगायत्रिमुच्चार्य हुनेत्पञ्चदशाहुतिः[3] ।
हंसश्शुचीति मन्त्रेण हुत्वा चैव तथा भवेत् ॥ १६८ ॥

घृतेन जुहुयात्सर्वं व्याहृतिं च हुनेत्पृथक्[4] ।
प्राणाहुतिक्रमेणैव होमयेत्प्र[5]णवेन तु ॥ १६९ ॥

परिषेचतं[6] ततः कुर्यात्पुनः पुण्याहमाचरेत् ।
वृषगायत्रिमन्त्रेण वृषस्य हृदये न्यसेत् ॥ १७० ॥

पश्चाद्दण्डं तु सङ्कल्प्य प्रासादस्य समं भवेत् ।
स्तूप्यन्तं? नासिकान्तं वा कन्धरं गोपुरान्तरम् ॥ १७१ ॥

चम्पकं चन्दनं चैव बिल्वकं पनसं तथा ।
वैणवं देवदारुं च याज्ञिकैश्च तरुं गुह! ॥ १७२ ॥

जाति[7] च क्रमुकं चैव दण्डान्यं क्रैव? सङ्ग्रहेत्[8] ।
त्रितालनाहमूलं स्यात्क्रमशो ग्रन्थिकं कृशम् ॥ १७३ ॥

---

1. जुहुयात्पश्चा-
2. जयादिः-
3. जुहुयात्पञ्चदशाहुती-
4. जुहुयात् पृथक्-
5. जुहुयात् प्र-
6. परिषेचनं-
7. जातिं-
8. संगृह्णीयात्-

अन्तस्साराणि सर्वाणि दारवं[1] तत्पुमान्विदुः ।
बहिस्साराणि सर्वाणि नारीरूपं भवेद्गुह![2] ॥ १७४ ॥

यागान्ते वर्जयेन्नारी कल्पयन्तं पुमान् विदुः ।
एवं दण्डानि[3] सङ्कल्प्य विशेषं निश्चितं त्विह ॥ १७५ ॥

हर्म्ये नवतलं[4] चेत्तु ध्वजं प्रतितलं[5] कुरु ।
उत्तमं त्विति विख्यातं त्रिताल्म्यां तु मध्यमम् ॥ १७६ ॥

तलैकाधमं[6] ज्ञेयं प्रासादमहतिर्भवेत् ? ।
कल्पप्रासादकं चेत्तु द्विगुणं दण्डदैर्घ्यकम् ॥ १७७ ॥

मानं वाऽप्येवमेवं स्याद्यामायामसमं भवेत् ।
स्थानानि सकलं चेत्तु कोणकोणय तद्दिशि ? ॥ १७८ ॥

प्रधानं पूर्वदिग्भागे शाङ्करे वा विशेषतः ।
अष्टदिक्षु ध्वजं कुर्याद्राज्यार्द्धि[7] चैव वै गुह ! ॥ १७९ ॥

यष्टित्रयं ततः कुर्याद्याज्ञिके त . . . भिर्भवेत् ।
आयामं रत्निमात्रं स्यात्तदर्धं[8] विस्तरं भवेत् ॥ १८० ॥

घनं तु कौशिकाङ्गुल्यवर्धावटमथैकतः ? ।
सुषिरद्वयमन्येषां योजयेत्सुदृढं सुधीः ॥ १८१ ॥

---

1. दारूणि-
2. नारीरूपाणि भवेयुर्गुह !-
3. दण्डान्-
4. नवतालं-
5. प्रतितालं-
6. तालैकमधमं-
7. द्राज्यर्द्धिः-
8. तदर्धं-

उपदण्डं वैणवं कुर्यात्पटोत्सेधसमं तु वा ।
हर्म्यतारार्धमानं वा रन्ध्रायामसमं तु वा ॥ १८२ ॥

ध्वजदण्डस्य चोत्सेधं[1] वेदभूतरसांशकम्[2] ।
उपदण्डस्य चोत्सेधं[3] प्रोच्यते तु शि[खि]ध्वजम्[4] ॥ १८३ ॥

षट्पञ्चचतुरङ्गुल्यं नाहमात्रप्रमाणतः ।
तस्योर्ध्वे योजयेद्विद्वान् यन्त्रयष्टिं विशेषतः ॥ १८४ ॥

वलयं चायसेनाथस्तर्धं कृत्वार्धवुद्धिमान्? ।
हस्तमात्रायतं कूर्चमग्रे चैव तु योजयेत् ॥ १८५ ॥

दर्भमालाभिरावेष्ट्य सप्रदक्षिणमाचरेत् ।
अग्रादिमूलपर्यन्तं मूलादग्रान्तमेव वा ॥ १८६ ॥

वलये योजयेद्रज्जं द्विगुणं मूलमाश्रितम् ।
कनिष्ठाङ्गुलिपरीणाहं तिवृत्त[5] कारयेद्गुह!? ॥ १८७ ॥

वृषस्य पुरतो वापि महापीठपुरोऽपि वा ।
वृषापरे पीठपृष्ठे गोपुरस्यापरे पुरे ॥ १८८ ॥

हस्तमात्रावटं खात्वा गोमयेनानुलेपयेत् ।
प्रोक्षयेत्कुशतोयेन चन्दनं चाक्षतं न्यसेत् ॥ १८९ ॥

हैमेन कच्छपं वाऽथ रौप्येण वृषभं तु वा ।
विष्णुं ध्यात्वाऽत्र वै वत्स! विन्यसेद्दण्डमूलके ॥ १९० ॥

---

1. चोत्सेधः–
2. रसांशकः–
3. चोत्सेधः–
4. शिखिध्वज !–
5. त्रिवृत्तं–

स्थापयेदपरे विद्वान् प्रासादाभिमुखावृतान् ।
ध्वजवेदिं प्रकुर्वीत तत्तद्दण्डस्य मूलके ॥ १९१ ॥

शैलके चेष्टके[1] वाऽथ मृन्मये वाऽपि कारयेत् ।
अधिष्ठानसमुत्सेधं मध्यमं तस्य विस्तरम्[2] ॥ १९२ ॥

अथवाऽरत्निमात्रं[3] स्यादुत्सेधं[4] तदूर्ध्वं त्विति ।
उपानस्य तु यत्तारं पिङ्क्तस्यैव तु तारकम् ॥ १९३ ॥

उपानात्पङ्क्तिकान्तं च उत्सेधं[5] त्विति चोच्यते ।
तदूर्ध्वेऽष्टदलं पद्मं कर्णिका च[6] समन्वितम् ॥ १९४ ॥

दर्पणोदरवत्सर्वं गोमयेनानुलेपयेत् ।
शिल्पिनस्तु विसृज्याथ प्रोक्षयेद्धृदयेन तु ॥ १९५ ॥

मङ्गलाङ्कुरमावृत . . . ष्टकमावृतम्? ।
पूर्णकुम्भैरलङ्कृत्य यावदीपैरलङ्कृतैः ॥ १९६ ॥

कौतुकं बन्धयेत्सर्वान् सौवर्णेनाथ तन्तुना ।
एवं . . . सङ्कल्प्य प्रभाते विमले गुह ! ॥ १९७ ॥

नित्यसन्ध्यावसाने तु वृषभं शूलमर्चयेत् ।
पूजयेत्पूर्ववत्सर्वानग्निमूर्तिं समर्चयेत् ॥ १९८ ॥

---

1. चेष्टकायां–
2. समुत्सेधः मध्यमः तस्य विस्तरः–
3. मात्रः–
4. दुत्सेधः–
5. उत्सेधः–
6. कर्णिकया च–

शेषद्रव्याणि सर्वाणि होमयेत्तु[1] षडङ्गकैः ।
जयादिर[2]भ्यातानांश्च राष्ट्रभृच्च[3] क्रमाद्धुनेत्[4] ॥ १९९ ॥

वृषगायत्रिमन्त्रेण प्रायश्चित्तार्थकं हुनेत्[5] ।
प्राणाहुतिं ततो दद्याद्धोमयेन्मू[6]लमन्त्रतः ॥ २०० ॥

अग्निमूर्तिं विसृज्याथ प्रोक्षयेदस्त्रमन्त्रतः ।
ध्वजादिदेवान् सम्पूज्य तत्तन्मूलेन मन्त्रवित् ॥ २०१ ॥

पञ्चविंशतितत्त्वान्तं वृषरूपं षडानन ! ।
रागान्तं वैनतेय स्यात्तत्त्वं स्यात्पञ्चविंशति ? ॥ २०२ ॥

प्रणवं विन्यसेन्मूर्ध्नि उकारं मध्यमस्तके ।
क्षौकारं विन्यसेच्छ्रोत्रौ[7] शृङ्गारं[8] शृङ्गमूलके ॥ २०३ ॥

गकारं दक्षिणे नेत्रे यकारं वामलोचने ।
विकारं नासिकादक्षे[9] झकारं तस्य[10] वामके ॥ २०४ ॥

हेकारं गलमध्ये तु वेकारमधरोष्ठके ।
दकारं तालुमध्ये तु वेकारमधरोष्ठके[11] ॥ २०५ ॥

---

1. जुहुयात्तु–
2. जयादीन–
3. राष्ट्रभृतं च–
4. क्रमाज्जुहुयात्–
5. जुहुयात्–
6. जुहुयान्मूल–
7. च्छ्रोत्रे–
8. शृङ्गारं–
9. दक्षिणभागे–
10. तस्याः–
11. अयं पादः एतत्पद्यपूर्वार्धद्वितीयपादस्य पुनरुक्तभूतः ।

दकारं तालुमध्ये तु[1] वकारमुत्तरोष्ठके ।
दाकारं दन्तपङ्क्तौ तु यकारं हृदये न्यसेत् ॥ २०६ ॥

धीकारं नाभिदेशे तु मकारं वृषणे न्यसेत् ।
हिकारं बीजदेशे तु तकारं दक्षिणे पिके[2] ॥ २०७ ॥

णकारं चापके दक्षे[3] पादे विन्यस्य षण्मुख! ।
वृकारं पादमूले तु षकारं पृष्ठदेशके ॥ २०८ ॥

चोकारं पुच्छदेशे तु दकारं तस्य मध्यमे ।
चात्कारं लाङ्गुलाग्रे तु क्षकारं खुरमूलके ॥ २०९ ॥

एवमक्षरविन्यासं पुनरङ्गानि विन्यसेत् ।
यस्य शृङ्गादिवृषभे मन्त्रं न्यस्त्वा तु मध्यमे? ॥ २१० ॥

गन्धादीन् पूजयेत् पश्चाच्छलं चक्रं सरोरुहम् ।
घृतं शिरोर्पणं कुर्यान्निशिचूर्णं[4] समर्चयेत् ॥ २११ ॥

कूर्चानुद्धृत्य शिरसा धारयेत्सदनावृतान् ।
कुम्भाद्विषे[5] समादाय वाहनान् हृदये न्यसेत्? ॥ २१२ ॥

तत्कुम्भस्योदकेनैव प्रोक्षयेत्तान् स्वमन्त्रकैः ।
सर्वालङ्कारसंयुक्त[6]सर्वातोद्यत्यमायुतम् ॥ २१३ ॥

---

1. अयं पादः पूर्वश्लोकतृतीयपादस्य पुनरुक्तभूतः ।
2. दक्षिणस्यां स्फिचि–
3. दक्षिणे–
4. निशाचूर्णं–
5. कुम्भाद्बिम्बं–
6. संयुक्तं–

ग्रामप्रदक्षिणं कुर्यात्त्रिशूलेन समायुतम् ।
सकुम्भं च विकुम्भं च द्विविधं सर्वमेव च ॥ २१४ ॥

सकुम्भं ब्राह्मणस्योक्तं विकुम्भं क्षत्रियं तथा ।
शूलं चक्रं च पद्मं च केवलं शूलमेव च ॥ २१५ ॥

ध्वजान्तिकं न्यसेद्वत्स! दण्डाग्रे वा शिवाग्रके ।
स्थण्डिलं पूर्ववद्वत्स! न्यस्त्वा[1] पूर्ववदाचरेत् ॥ २१६ ॥

यष्ट्वा[2] यन्त्रक्रमेणैव बन्धयेत्सुदृढायतम् ।
घण्टां च पुष्पमालां च बन्धयेद्धृदयेन तु ॥ २१७ ॥

चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः ।
नृत्तगानं च वाद्यं च शङ्खकाहलवादकैः ॥ २१८ ॥

जयशब्दं भेरिशब्दं[3] ब्रह्मघोषसमाकुलम् ।
वृषतालं तु सन्ताड्य ध्वजमारोपयेत्पुनः ॥ २१९ ॥

भिन्नं भिन्नं तथा जीर्णं सद्यो सन्त्याज्य[4] षण्मुख! ।
प्रायश्चित्तोक्तवत्कुर्याच्छान्तिहोमं समाचरेत् ॥ २२० ॥

ध्वजमन्यं गृहीत्वा तु लेखयेद्वृषदैवतम् ।
सनद्याधिवासनं? कुर्याच्छुद्ध[5]पुण्याहमाचरेत् ॥ २२१ ॥

---

1. न्यस्य–
2. इष्ट्वा–
3. भेरी–
4. सद्यः सन्त्यज्य–
5. च्छुद्धि–

ब्राह्मणान् भोजयित्वा तु क्षिप्रमारोपयेद्ध्वजम् ।
वृषकुम्भाभि[1]षिच्याथ? दण्डमूले विशेषतः ॥ २२२ ॥

परिवारघटाश्चैव[2] तत्तद्दिक्ष्वभिषेचयेत् ।
पूजयेत्पूर्ववद्धीमान् गन्धादीनि[3] यथाक्रमम् ॥ २२३ ॥

वृषोच्छिष्टं ददेन्नित्यं[4] वन्ध्या वा रोगि[5] वाऽप्यथ ।
तत्पिण्डं प्राशयेन्नारी अपुत्री[6] पुत्रामप्नुयात ॥ २२४ ॥

व्याधिघ्नं सर्वदोषघ्नं वृषोच्छिष्टं शिखिध्वज! ।
ध्वजदेवं वृषं विद्याद्घण्टानादं षडानन! ॥ २२५ ॥

दण्डस्य विष्णुदेवत्यं[7] मालावेदसयं[8] तथा ।
विदिब्रह्मादिदैवत्यं? पूजयेत्तु स्वनामतः ॥ २२६ ॥

वृष[9]वृषभदैवत्यं वृषनाथ[10] त्रिमूर्तयः ।
त्रिसन्ध्या[11]मर्चयेद्विद्वान् वृषगायत्रिमुच्चरन् ॥ २२७ ॥

---

1. वृषकुम्भयसि-
2. घटांश्चैव-
3. गन्धादिभिः-
4. दद्यान्नित्यं-
5. रोगी-
6. नारीमपुत्रा-
7. दैवत्यं-
8. वेदमयी-
9. वृषः-
10. वृषनाथः-
11. त्रिसन्ध्य-

अथवा पूजयेद्वत्स! द्वौ सन्ध्यावे[1]कमेव वा ।
रात्रौ भेरिं[2] तु सन्ताड्य सर्वदेवप्रियार्थकम् ॥ २२८ ॥

भेरिकालक्षणं वक्ष्ये शृणुष्वैतत्तु षण्मुख! ।
खार्दिरं पनसं वापि आम्रं बिल्वं तथैव च ॥ २२९ ॥

जातिवृक्ष[3]शिरीषंच चम्पकार्जनमेव[4] च ।
असनं बकुलं चैव उशीरं चन्दनं तथा ॥ २३० ॥

द्विजा उशीरकाः प्रोक्ताः क्षत्रियं वकुळं तथा ।
न्यग्रोडं[5] वैश्यजातीनां प्लक्षं शूद्रस्य कीर्तिता? ॥ २३१ ॥

एवमादीनि वृक्षाणि[6] सारं सङ्गाह्य[7] यत्नतः ।
उत्तमं सप्ततालं स्यान्मध्यमं पञ्चतालकम्[8] ॥ २३२ ॥

अधमं च त्रितालं स्याद्भेरीयामं[9] त्रिधा भवेत् ।
. . . . यामसंयुक्तं[10] द्विमुखं च करिष्यति ॥ २३३ ॥

मुखयोर्नाहमुद्दिष्टं[11] द्वात्रिंशाङ्गुलमुत्तमम्[12] ।
अष्टाविंशदङ्गुलं . . . . . . . . . ॥ २३४ ॥

---

1. द्विसन्ध्यमे–
2. भेरीं–
3. जातिवृक्षं–
4. कार्जुनमेव–
5. न्यग्रोधं–
6. एवमादयः वृक्षाः–
7. सङ्गृह्य–
8. उत्तमः सप्ततालः स्यात् मध्यमः पञ्चतालकः–
9. अधमश्च त्रितालःस्यात् भेर्यायामः–
10. एवमायामसंयुक्तं–
11. नाँह उद्दिष्टः–
12. द्वात्रिंशदङ्गुल उत्तमः–

. . . . . . . . . . . . . . . . . . |
. . . . . वद्वामस्य मुखं भवेत् ॥ २३५ ॥

भेरीमध्यमनाहं[1] स्यात् षष्टिमुत्तमं[2] भवेत् ।
मध्यमं तु[3] चतुष्षष्टि द्विषष्टिश्चाधमं स्मृतम्[4] ॥ २३६ ॥

भेरिकावलयं तत्र एकाङ्गुलमिति स्मृतम् ।
उत्तमं तद्विजानीयान्मध्यमं यवहीनकम् ॥ २३७ ॥

अधमं तुर्यवं[5] विद्धि ओष्ठमानं त्रिधा भवेत् ।
मध्य[6]तस्यावधौ तत्र क्रमेण कृशतां नयेत् ॥ २३८ ॥

उदरं सुषिरं चैव सर्वत्रैव तु कारयेत् ।
वलयं वक्त्रोपरि कुर्यात्ताम्रमायसमेव वा ॥ २३९ ॥

यवाधिकं तु वलयं ओष्ठोपरि समन्ततः ।
सुषिरस्य क्षयं युक्तं अष्टादशमवं? बुधः ॥ २४० ॥

सुषिरं सप्तदशं? चतुर्दशाधमं भवेत्? ।
अष्टादशे तु वामे तु दक्षिणेच समन्ततः ॥ २४१ ॥

वलयं ग्राह्य[7] यत्नेन तदलाभे तु काष्ठजम् ।
तिन्त्रिणीकरवीरं च अशोकाचावसन्तिका? ॥ २४२ ॥

---

1. नाहः–
2. मुत्तमः–
3. मध्यमस्तु–
4. श्चाधमः स्मृतः–
5. मं चतुर्यवं–
6. मध्ये–
7. गृहीत्वा–

एवं यष्टि[1] समादाय वलयं तत्र कारयेत् ।
रज्जुना[2] वेष्टयेत्पश्चात्सुश्लक्ष्णेन[3] दृढीकृतम् ।। २४३ ।।

सूत्रेण वेष्टनं कृत्वा यवान्तरमनन्तरम् ।
वलयं क्षालयेत्तत्र मनेन? सह योजितम् ।। २४४ ।।

कपिलायनचर्मेण? जरावत्स यथापि वा? ।
गावं? वत्सं तु विप्रेन्द्र दोपमन्त्रं परीक्ष्य च? ।। २४५ ।।

चर्म सङ्ग्राह्य[4] यत्नेन क्षालयेच्छुद्धवारिणा ।
अन्नकल्केन संयोज्य वलयेनैव संयुतम् ।। २४६ ।।

संयोज्य मतिमान् सम्यग्वामादिक्रमयोगतः ।
चर्मणा वेष्टयेद्वक्त्रं चर्मसूत्रेण वेष्टयेत् ।। २४७ ।।

वामवक्त्रे तु सर्वं स्यान्नवयन्त्रेषु योजितम् ।
यन्त्रलोहममुं चैव ताम्रमायसमेव वा ।। २४८ ।।

यस्मिन् सुषिरसंयुक्तं दक्षिणे मुखसंस्थितम् ।
दक्षिणस्य मुखे चैव त्यक्त्वा तु चतुरङ्गुलम् ।। २४९ ।।

यन्त्रस्यान्तेच वै कुर्यान्नवयन्त्रं प्रकल्पयेत् ।
चर्मसूत्रक्रमात्तेषु दक्षिणे बन्धयेत्पुनः ।। २५० ।।

वामदक्षिणसंयोज्य? चर्मसूत्रेण बन्धयेत् ।
पिशितस्यापि विन्यस्य चर्मसूत्रेषु बुद्धिमान् ।। २५१ ।।

---

1. यष्टिं-
2. रज्ज्वा-
3. स्सुश्लक्ष्णया-
4. सङ्गृह्य-

प्रत्येकं कल्पयेद्विद्वान् पिशितं तत्र योजयेत् ।
एवं कर्मक्रियायुक्तं लक्षणेन समन्वितम् ॥ २५२ ॥

भेरीं च विष्णुदेवत्यं [1] पूजयेद्विष्णवे नमः ।
दक्षिणे रुद्रमभ्यर्च्य वामे विष्णुं समर्चयेत् ॥ २५३ ॥

भेरीमध्ये ततो ध्यायेद्ब्रह्माणं लोककारणम् ।
अनन्तो वलयश्चैव चन्द्रार्कौ मुखबन्धनौ ॥ २५४ ॥

चर्मसूत्रेषु सर्वेषु वासुक्याद्याश्च देवताः ।
वागीश्वरी क्रिया कीर्तिर्लक्ष्मी[2]सृष्टिस्तथैव च ॥ २५५ ॥

विद्या कान्तिश्च दुर्गा च गणेशं च [3] तथैव च ।
वनयन्त्रेषु सर्वेषु पूजयित्वा स्वनामभिः ॥ २५६ ॥

अत्रिभृगु[4]वसिष्ठश्च काश्यपोदुम्बरस्तथा [5] ।
गौतमश्च भरद्वाज [6] अगस्त्यश्च पराशरः ॥ २५७ ॥

हंशकानवके सूत्रे देवतानां प्रकीर्तिताः ? ।
चर्चपुटाश्रयोद्भूताः केचिच्चापपुटा श्रयाः ॥ २५८ ॥

इत्येवं मुखमाश्रित्य सर्वदेवगतादितः ? ।
सर्वदेवमयं प्रोक्तं सर्वप्रीतिकरं शुभम् ॥ २५९ ॥

---

1. दैवत्यां–
2. लक्ष्मीः–
3. गणेशश्च–
4. अत्रिर्भृगुः–
5. काश्यपोदुम्बरौ–
6. भरद्वाजः–

षोडशाङ्गुलमायामं? कोणे कौचोदकीं[1] न्यसेत् ।
भेरीं च जीवकाष्ठेन जीवं वै धर्मकाष्ठकम्? ॥ २६० ॥

जीवाजीवनजीवानां जीवस्थाने तु योजयेत्? ।
अजीवे जीव[2]संयोज्य ताडयेत्साधकोत्तमम्[3] ॥ २६१ ॥

चर्मं चर्मेण सम्बन्धं? सिरेणासैर्यकं तथा? ।
कांस्यं कांस्येन वै वत्सं[4] वर्ण्यं कर्णेन भाषितम्? ॥ २६२ ॥

सुषिरं सुषिरेणैव प-शब्दाः[5] प्रकीर्तिताः ।
रात्रौ सन्ध्यावसाने तु मध्यरात्रेऽथवा पुनः ॥ २६३ ॥

शिवाग्रे स्थण्डिलं यष्टयै? कुर्याद्द्रोणाष्टशालिभिः ।
भेरिकापूर्वदिग्भागे शूलं पश्चिमके न्यसेत् ॥ २६४ ॥

अन्नलिङ्गं तथा चन्द्रशेखरं पश्चिमे न्यसेत् ।
प्रोक्षयेद्धृदयेनैव वाद्यकं पूजयेत्ततः ॥ २६५ ॥

आचार्यो भेरीं सन्ताड्य प्रासादेन तु मन्त्रतः ।
टमश्च टटमश्चैव टाटमश्च तथैव च ॥ २६६ ॥

टमस्त्रियस्फकेनैव? ताडयेत्प्रथमं गुह! ।
इदं विष्णिवति मन्त्रेण टट्टमं ताडयेद्बुधः ॥ २६७ ॥

तृतीयं टण्टमं ताड्यं ब्रह्मजज्ञानमन्त्रतः ।
एवं तु ताडयेद्विद्वान् वाद्यकं ताडयेत्ततः ॥ २६८ ॥

---

1. कौमोदकीं–
2. जीवं–
3. त्तमः–
4. वत्स!
5. पञ्चशब्दाः–

हस्ते तु ताड्यं शिवमन्त्रसिद्धान्
हस्तेन पुष्पाञ्जलिना प्रवेशान् ।
यत्सर्वताळं सुखघोषवाद्यं
गन्धं च पुष्पं च सुधूपदीपम् ॥ २६९ ॥

भवन्तु वेद्याञ्जलि दापयेत्तु
ताम्बूलमा-म्य[1] तु तं सुमन्त्रम् ।
सान्निध्यमुद्रां च दशोपचाराना-
ष्टादशानां गणदेवतानाम् ॥ २७० ॥

चराचरं भूतभूतेन्द्रगुप्तं
विंशद्दिनैकं शिवयोगतीर्थम् ।
तदर्धमाहानसुराधिशानां
ध्वजोद्धृतं चैव तु शैवयोगम् ॥ २७१ ॥

चच्चपुटासम्भूताश्च केचित् ।
चाचपुटादिषु इत्येते प्रतिताळं तु वाद्यकं तु विशेषतः? ॥ २७२ ॥

समं चैव द्रुवं[2] चैव अतिध्रुवसमं तथा? ।
ताळं च प्रोक्तमार्गेण क्रमात्ताळं वदेत्क्रमात् ॥ २७३ ॥

यक्षाश्च राक्षसाश्चैव तथा किन्नर एव च ।
नागाश्च पितरश्चैव गन्धर्वा गरुडस्तथा ॥ २७४ ॥

विद्याधरास्तु सर्वैते आगत[3]श्शीघ्रमेव वै ।
देवताश्च षडङ्गाश्च? सिद्धाश्चापि तथैव च ॥ २७५ ॥

---

1. माचम्य-
2. ध्रुवं-
3. आगता-

विश्वे द्विपाग्निवासाश्च आगताश्शीघ्रमेव वै ।
पर्वताश्च समुद्राश्च विद्याश्चैव विशेषतः ॥ २७६ ॥

सर्वे विद्याधराश्चैते आगताश्शीघ्रमत्र वै ।
भूम्यन्तरिक्षस्वर्गाश्च स्थलपातालवासिनाम्[1] ॥ २७७ ॥

ब्रह्मलोकनिवासाश्च महामेरुनिवासिनः ।
विष्णुपूजश्चयाश्चैव आगताश्शीघ्रमत्र वै ॥ २७८ ॥

मुनयः पितरश्चैव महेशोभुवि मानवाः ।
अन्यैश्च समयश्चैव आगतः[2] शीघ्रमत्र वै ॥ २७९ ॥

तस्मान्नैव[3] तु काले तु शङ्खधारासमन्वितम् ।
घोषयन्तः प्रयत्नेन पूरयन्तो दिशो दश ॥ २८० ॥

भेरीताडनमेवोक्तं बलिनामक्रमं श्रृणु ।
प्रथमं बलिताळं तु बलिमुद्दिश्य कारयेत् ॥ २८१ ॥

प्रथमं मञ्जिणितालं द्वितीयं वृषतालकम् ।
तृतीयं चन्द्रतालं श टङ्करी च चतुर्थकम् ॥ २८२ ॥

पञ्चमं चोत्कटं चव पुन्नितालं तु षष्ठमे[4] ।
शर्वरीसप्ततालं तु अष्टमं गरुडं तथा ॥ २८३ ॥

सप्तमं[5] तटप्रहारं स्याद्दशमं हंसतालकम् ।
दिक्प्रदक्षिणमावृत्य गोपुरेण प्रवेशयेत् ॥ २८४ ॥

---

1. वासिनः–
2. अन्ये च समयाश्चैव आगताः–
3. तस्मिन्नेव–
4. षष्ठं–
5. नवमं–

जयशब्दाद्बहिर्गच्छेद्धोषयेच्छङ्खकाहळे ।
इन्द्रस्य समतालं तु बद्धावणं तथानले ॥ २८५ ॥

यमस्य भृङ्गिणीतालं मल्लतालं तु नैरुते[1] ।
नवतालं तु वारुण्यां सर्वतालं तु वायवे ॥ २८६ ॥

कौशिकं तु कुबेरं स्यादीशान्ये बक्करी तथा ।
एवं प्रदक्षिणं कृत्वा उच्चरंस्तत्र घोषयेत् ॥ २८७ ॥

तालानां तु समाहूयादोष्टान्यं परीक्ष्य च? ।
ब्रह्मण[2]शूद्रकन्यायां जातः पारशवः स्मृतः ॥ २८८ ॥

स्वानुष्ठानपरो नित्यं तद्वद्देवस्य भक्तिमान् ।
रूपयौवनसम्पन्नः विशालकुशलान्वितः ॥ २८९ ॥

स्नात्वाऽऽचम्य शुचिर्भूत्वा शुद्धवासा जितेन्द्रियः ।
वस्त्रानुलेपनैः पुष्पैर्भूषणैरुपशोभिते[3] ॥ २९० ॥

यज्ञोपवीतसंयुक्तं[4] शिवदीक्षाभिषिक्तकः ।
तत्र व्रते च भेर्यादि ताळयेत्पुत्रमेव वा ॥ २९१ ॥

एवमेव द्विसन्धौ च[5] कृत्वा लोकस्य शान्तिकम् ।
आयुष्यं श्रीं[6] बलं चैव आरोग्यं पुत्रवर्धनम् ॥ २९२ ॥

---

1. नैर्ऋते–
2. ब्रह्मणः ब्राह्मणात्=ब्राह्मणात्–
3. शोभितः–
4. संयुक्तः–
5. द्विसन्ध्यं च–
6. श्रियं–

इत्येवं बलिताल्रं तु राजा राष्ट्रस्य[1] वर्धनम् ।
लिङ्गबेरगणेशादीन् पूजयेत्तु विधानतः ॥ २९३ ॥

वास्त्वस्थानदेवतान् सर्वान् पूजा[2]द्विगणमाचरेत् ।
नवाहं वाऽथ सप्ताहं पञ्चाहं त्रियहं तु वा ॥ २९४ ॥

यागारम्भ[3] समारभ्य यथाविधि पुरस्करम्[4] ।
यागशालां ततः कुर्यादैशान्यां पावके तथा ॥ २९५ ॥

नैर्ऋत्यां वायवे सोमे चन्तरालेऽथवा पुनः ।
सप्तहस्ताष्टहस्तं वा नवद्वादशकं तु वा ॥ २९६ ॥

समं वै चतुरश्रं तु मध्ये नन्दपदं कुरु ।
कूटं वा मण्टपं वाऽपि प्रपां वाऽपि प्रकल्पयेत् ॥ २९७ ॥

दक्षिणे दक्षिणद्वारमुत्तरे चोत्तरं तथा ।
प्रधानरन्ध्रमेवोक्तमन्येषां जालकाकृतिः ॥ २९८ ॥

विशेषमिति[5] विख्यातं[6] सर्वं सामान्यमेव तु ।
मण्टपं तु त्रिधा भाज्य[7] मध्यभागे तु वेदिका ॥ २९९ ॥

रत्निमात्रसमुत्सेधं दर्पणोदरसन्निभम् ।
परितश्चोपवेदिं तु चतुरङ्गुलमेव वा ॥ ३०० ॥

---

1. राजराष्ट्रस्य–
2. वास्तुस्थानां सर्वासां देवतानां पूजां–
3. यागारम्भं–
4. पुरस्सरम्–
5. विशेष इति–
6. विख्यातः–
7. विभज्य–

कुण्डानि परितश्चैव नव पञ्चैक वा[1] पुनः ।
चतुरश्रं चतुर्दिक्षु विदिक्षु वृत्तकुण्डकम् ॥ ३०१ ॥

इन्द्रईशानयो[2]र्मध्ये प्रधानं पद्मकुण्डकम् ।
पञ्चाग्निं चेत्तु वै वत्स! चतुरश्रं चतुर्दिशि[3] ॥ ३०२ ॥

पद्मकुण्डं तथैशान्यं[4] कल्पयेदेवमेव तु ।
एकाग्निं चेत्प्रकुर्वीत पूर्वे वा दक्षिणेऽपि वा ॥ ३०३ ॥

पश्चिमे चोत्तरे वापि कारयेत्तु शिखिध्वज!
लिङ्गपीठाकृतिं यावत्तावत्प्राधान[5]कुण्डकम् ॥ ३०४ ॥

वृत्तं चेद्वृत्तकं सर्वे दात्रं[6] चेदाश्रमे व च ।
दर्पणोदरवत्कुर्यान्निम्नोन्नतविवर्जितम् ॥ ३०५ ॥

गोमयेनोपलिप्याथ प्रोक्षयेत्पुरुषेण तु ।
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा ॥ ३०६ ॥

वितानेनोर्ध्वमाच्छाद्य दिग्ध्वजैश्च प्रकल्पयेत् ।
दर्भमालाभिरावेष्ट्य मुक्तादामैर[7]लङ्कृतम् ॥ ३०७ ॥

स्तम्भानावेष्ट्य वस्त्रैश्च तरङ्गेणावृताद्बहिः[8] ।
शिल्पिनं तु विसृज्याथ पुनः पुण्याहमाचरेत् ॥ ३०८ ॥

---

1. पञ्चैकं वा–
2. इन्द्रेशान–
3. चतुर्दिक्षु–
4. तथैशान्यां–
5. त्प्रधान–
6. सर्वमाश्रं–
7. दामभि–
8. णावृतान् बहिः–

ब्राह्मणान् भोजयेत्तत्र प्रोक्षयेच्छुद्धतोयकैः ।
वास्तुहोमं ततः कुर्यात्पर्यग्नीकरणं[1] कुरु ॥ ३०९ ॥

वाचयेच्छुद्धपुण्याहं[2] सपुष्पाक्षतशोभितम् ।
धूपदीपैरलङ्कृत्य मङ्गलाकुर[3]मावृतैः ॥ ३१० ॥

मङ्गलाधिपतिर्यष्ट्वा[4] ब्रह्मजज्ञानमन्त्रतः ।
तीर्थाङ्कुरार्पणं लब्ध्वा उत्सवस्य दिनादितः ॥ ३११ ॥

सायाह्नसमयारभ्य[5] चाङ्कुरार्धं[6] तथोत्सवम् ।
दीक्षितं[7] शिवभक्तैश्च अलाभे भूसुरैरपि ॥ ३१२ ॥

शिरोवस्त्रेण संवेष्ट्य पालिकादीनि कारयेत् ।
कुद्दालि वस्त्रमात्रैश्च भूषयेदपरानयेत् ॥ ३१३ ॥

नद्यां वापि[8] तटाके वा केदारे पर्वते वने ।
शुद्धस्थानमनुप्राप्य शोधयेदस्त्रमन्त्रतः ॥ ३१४ ॥

मृदं ग्राह्ये तु[9] वामेन पालिकादीनि पूरयेत् ।
अवटं पूरयेत्तत्र हृदयेन शिखिध्वज ! ॥ ३१५ ॥

---

1. पर्यग्निकरणं–
2. च्छुद्धिपुण्याहं–
3. मङ्गलाङ्कुर–
4. पतिं इष्ट्वा–
5. समये आरभ्य–
6. अङ्कुरार्धं–
7. दीक्षितैः–
8. वाप्यां–
9. गृहीत्वा–

ग्रामप्रदक्षिणं कुर्यात्प्रविशेद्यागमण्टपम् ।
मण्टपस्योत्तरे भागे स्थण्डिलं शालिना कुरु ॥ ३१६ ॥

अङ्कुरार्पणयेद्विद्वान्[1] पूर्वोक्तविधिना सह ।
शिवमाराधयेत्पश्चाद्यथाविन्तानुसारतः ॥ ३१७ ॥

शिवाग्रे स्थण्डिलं कुर्यात्प्रोक्षयेदस्त्रमन्त्रतः ।
नवकुम्भान् समादाय त्रिसूत्रेण विचित्रितान् ॥ ३१८ ॥

पूरयेद्गन्धतोयेन स्थण्डिलोपरि विन्यसेत् ।
वर्धनीमुत्तरे स्थाप्य[2] परितोऽष्टघटानि वै[3] ॥ ३१९ ॥

ब्रह्मविष्णुघटान्न्यस्त्वा[4] विधिना कारयेद्गुरुः ।
पिधानकूर्चवस्त्राभ्यां सौवर्णं[5] पङ्कजान्वितान् ॥ ३२० ॥

वज्रादिशूलपर्यन्तं विन्यसेत्सुप्रदक्षिणम् ।
पद्मं चक्रयुतो[6] वाऽपि विधिना शूलमेव च ॥ ३२१ ॥

सौवर्णं रजतं ताम्रं दारुजेनैव वा[7] कुरु ।
लोहजेनायुधान्[8] कुर्याल्लक्षणेनैव कारयेत् ॥ ३२२ ॥

दारवं याज्ञिकैर्वृक्षैर्हस्तमात्रप्रमाणतः ।
नाहं च द्व्यङ्गुलं मानमात्रं गुल्फेन कारयेत् ॥ ३२३ ॥

---

1. रानर्पयेद्विद्वान्—
2. स्थापयित्वा—
3. घटांश्च वै—
4. न्न्यस्य—
5. सौवर्ण—
6. चक्रयुतं—
7. दारुजं वा—
8. लोहजादायुधान्—

प्रागादीशानपर्यन्तं विन्यसेत्तु शिखिध्वज ! ।
वस्त्रैर्गन्धैस्सुमाल्यैश्च धूपदीपैश्च पूजयेत् ॥ ३२४ ॥

कौतुकंशातकुम्भेन राजतं[1] वाऽथ तन्तुना ।
कारयेत्तु विशेषेण षोडशाङ्गुलमानतः ॥ ३२५ ॥

लिङ्गनाहसमं सूत्रं प्रधानं कौतुकं विदुः ।
स्थालिकां पूरयेद्वत्स ! तण्डुलैश्च तिलैरपि ॥ ३२६ ॥

भस्मताम्बूलसंयुक्तं मध्येपद्मं समालिखेत् ।
पुण्याहं पूर्ववत्कुर्यांज्जनान् सर्वान्[2] प्रदापयेत् ॥ ३२७ ॥

नमोऽन्तं सर्पमन्त्रेण पूजयेत्कौतुकं गुह ! ।
त्र्यम्बकेन मन्त्रेण भस्मे[3]स्पृष्ट्वा तु कौतुकम् ॥ ३२८ ॥

शङ्खंच चक्रभरी च वज्रादीनि यथाक्रमम् ? ।
चण्डेशं च विशेषेण बन्धयेद्वत्स ! वार्धकम् ॥ ३२९ ॥

एकबेर[4] द्विबेरं वा त्रिबेरं सर्वमेव वा ।
ग्रथितं कौतुकं यत्तु तत्कौतुकमुदाहृतम् । ३३० ॥

तेन कुर्यात्तु तीर्थं तमुत्सवं कारयेद्गुह ! ।
बृहत्सामेति मन्त्रेण त्र्यम्बकेनैव[5] मन्त्रतः ॥ ३३१ ॥

त्रिभिरावृतं नीत्वा दापयेत्तु मखे मुखे ? ।
देवानां दक्षिणे हस्ते शक्तीनां वामके करे ॥ ३३२ ॥

---

1. रजतेन–
2. जनानां सर्वेषां–
3. त्र्यम्बकेण मन्त्रेण स भस्म–
4. एकबेरं–
5. त्र्यम्बकेणैव–

शूलस्य मध्यमे पत्रे पद्मचक्रौ च[1] कण्ठके ।
बन्धयेत्कौतुकं तत्र भस्म दत्त्वा पृथक् पृथक् ॥ २३३ ॥

ताम्बूलं दापयेद्विद्वान् जनान् सर्वान् प्रदापयेत् ।
शिवकुम्भे शिवं ध्यात्वा वर्धन्यां तु मनोजनीम् ॥ २३४ ॥

लिङ्गमूर्त्यां समावाह्य विन्यसेत्कुम्भमध्यमे ।
पीठात्मनि? न्यस्त्वा वर्धन्या विन्यसेद्गुह ! ॥ २३५ ॥

लोकपालान्न्यसेदष्टकुम्भमध्ये षडानन ! ।
नवरत्नं पञ्चरत्नं विन्यसेच्छिववर्धनीम् ॥ २३६ ॥

निष्कं[3] वाऽर्धहैमेन पङ्कजं विन्यसेद्घटे ।
चन्दनं चाक्षतं पुष्पं धूपदीपं निवेद्यकम् ॥ २३७ ॥

देशिको मूर्तपैस्सार्धं पूजयेत्तु विशेषतः ।
शिवकुम्भं समादाय धारयेच्छिरसोपरि ॥ २३८ ॥

शिष्याणां परिचाराणां धारयेत्स्थापनं क्रमात् ।
वज्रादिशूलपर्यन्तं शिवाग्रं पुरतो न्यसेत् ॥ २३९ ॥

विमानप्रदक्षिणं कुर्यात्प्रविशेद्यागमण्टपम् ।
स्थण्डिलं वेदिकामध्ये कुर्याद्द्रोणाष्टशालिभिः ॥ २४० ॥

तदर्धं तण्डुलैर्भूष्य[4] तण्डुलार्धं तिलैरपि ।
लाजापुष्पैः[5] परिस्तीर्य स्थण्डिलं[6] नलिनं लिखेत् ॥ २४१ ॥

---

1. पद्मचक्रयोश्च–
2. वर्धन्याम्–
3. निष्केण–
4. भूषयित्वा–
5. लाजपुष्पैः–
6. स्थण्डिले–

योगेशं विन्यसेन्मध्येष्वन्येषामपि पूर्ववत् ।
पूजा[1] पूर्वोक्तविधिना सन्धादीनि यथाक्रमम् ? ॥ ३४२ ॥

चतुर्दिक्षु चतुर्वेदैः कुर्यादध्ययनं ततः ।
अघोरास्त्रं क्षुरिकास्त्रं जप्त्वा वै दक्षिणोत्तरे ॥ ३४३ ॥

नृत्तगेयैश्च वाद्यैश्च स्तोत्रध्वनिसमायुतम् ।
शिवादिलोकपालान्तांस्तत्तध्यानसमन्वितान् ॥ ३४४ ॥

तत्तन्मन्त्रेण सम्पूज्य यथोक्तविधिना गुह ! ।
अष्टमङ्गलरूपाणि परितः कल्पयेत्क्रमात् ॥ ३४५ ॥

दर्पणे तु उमादेवीं पूर्णकुम्भे तु जाह्नवीम् ।
वृषभे तु धरादेवीं कावेरी[2] युग्मचामरौ[3] ॥ ३४६ ॥

श्रीवत्से तु महालक्ष्मीं स्वस्तिके तु सरस्वती[4] ।
शङ्खे तु शक्तिदेवी[5] च दीपे स्वाहाधिदेवताः[6] ॥ ३४७ ॥

उर्वशी मेनका चैव रम्भा चैव तिलोत्तमा ।
सुमुखी सुन्दरी चैव कौमुखी कामवर्धनी ॥ ३४८ ॥

एते चाप्सरसाः[7] प्रोक्ता अष्टमाङ्गल[8]धारिकाः ।
मङ्गलाष्टकदेवानां एवमेवेति विन्यसेत् ॥ ३४९ ॥

---

1. पूजां-
2. कावेरीं-
3. चामरयुग्मे-
4. सरस्वतीम्-
5. शक्तिदेवीं-
6. देवताम्-
7. एताश्चाप्सरसः-
8. मङ्गल-

वितानं चान्द्रदैवत्ये दर्भमाला सरस्वती[1] ।
दिग्ध्वजा[2]लोकरक्षेशान् यजेद्गन्धादिभिः सह ॥ ३५० ॥

शङ्खपद्मनिधिं चैव मुक्तादामादिदैवतम्[3] ।
अन्तस्तम्भचतुष्कोणे धर्मादीनां तु देवताः ॥ ३५१ ॥

अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
अग्निमूर्तिं समावाह्य विन्यसेत्कुण्डमध्यमे ॥ ३५२ ॥

शिवाग्निं कल्पयेत्पश्चाद्रूपवत्कारयेत्पुनः । ?
अष्टबाहुं चतुर्वक्त्रं प्रतिवक्त्रं त्रिलोचनम् ॥ ३५३ ॥

शङ्खं शूलं च वज्रं च पताकां दक्षिणे करैः ।
वरदं त्वङ्कुशं पाशं घण्टां वै वामकैः करैः ॥ ३५४ ॥

रक्तवर्णनिभं वक्त्रं[4] देहं ? सप्तजिह्वाभिरावृतम् ।
हिरण्या कनका रक्ता कृष्णा चैव तु सुप्रभा ॥ ३५५ ॥

अतिरक्ता बहुरूपाः सप्तजिह्वाः प्रकीर्तिताः ।
हिरण्या सद्यवक्त्रे तु रक्षायां[5] वामवक्त्रके ॥ ३५६ ॥

कृष्णा वै वामवक्त्रे तु[6] सुप्रभा पुरुषानने ।
अतिरक्ता बहुरूपा कनका चोर्ध्ववक्त्रके ॥ ३५७ ॥

---

1. चन्द्रदैवत्ये दर्भमालां सरस्वतीम्-
2. दिग्ध्वजान्-
3. माधिदैवतम्-
4. अत्र देहमिति पदमलङ्गतम्-
5. रक्तास्यात्-
6. कृष्णाचाघोरवक्त्रे तु-

सद्यादीशानपर्यन्तं जिह्वास्थानेति[1] चोच्यते ।
लों घौं कां यौं ह्रौं घ्रौं स्रौं—
जिह्वामन्त्रमिदं प्रोक्तं हिरण्यादि यथाक्रमम् ॥ ३५८ ॥

गन्धादिनाऽर्चयेत्सर्वांस्ततो होमं समाचरेत् ।
समिदाज्यचरुं लाजान् सर्षपं च यवांस्तिलान् ॥ ३५९ ॥

समिद्दाहुतिमीशानं[2] पुरुषेण घृताहुति[3] ।
चरुं हुत्वा अघोरेण लाजा वामेन हूयते ॥ ३६० ॥

सर्षपं हृदयेनैव शिखायां च यवाहुतिः[5] ।
कवचेन तिलं हुत्वा मुष्टिमात्रं पृथक् पृथक् ॥ ३६१ ॥

उत्तमं त्विति विख्यातं तदर्धं मध्यमाहुतिः ।
तस्यार्धमधमं ज्ञेयं प्रमाणं सर्वहोमयेत्[6] ॥ ३६२ ॥

शतमर्धं तदर्धं च प्रतिद्रव्यं तु हूयते ।
सर्वद्रव्यं समोपेतं हव्यवाहेति होमयेत्[7] ॥ ३६३ ॥

द्रव्यान्ते व्याहृतिं हुत्वा हुत्वा पूर्णाहुतिं पुनः ।
हवीष्टौ ? कृतान्ते तु[8] यदस्येति च होमयेत्[9] ॥ ३६४ ॥

---

1. जिह्वास्थानमिति–
2. मीशानेन–
3. घृताहुतिम्–
4. हूयन्ते–
5. यवाहुतिम्–
6. सर्वं जुहुयात् (अग्रेऽप्येवमेव)–
7. जुहुयात्–
8. कृत्वान्ते तु–
9. जुहुयात्–

इदं विष्णिवति मन्त्रेण त्र्यम्बकेनैव[1] हो[म]येत्[2] ।
ब्रह्मजज्ञानमन्त्रेण व्योमव्यापिदशाक्षरैः ॥ ३६५ ॥

गोरीमिमाय मन्त्रेण अतिरक्तेति हूयते ।
आप्यायस्वेति मन्त्रेण हूयतेति विचक्षणैः ॥ ३६६ ॥

ईशानः सर्वविद्यानां बहुरूपेति होमयेत्[3] ।
वज्रादिशूलपर्यन्तं तत्तन्नाम्नैव हूयते ॥ ३६७ ॥

जयादिर[4]भ्यातानांश्च राष्ट्रभृच्चाहुतिं[5] पुनः ।
पुन–त्र्यम्बकेनैव[6] प्रायश्चित्ताहुती दश ॥ ३६८ ॥

शिवप्रसाद[7]मन्त्रेण प्रणवेन पृथक् पृथक् ।
एकैक[8]माहुतिं हुत्वा व्याहृतिं जुहुयाद्गुह ! ॥ ३६९ ॥

पूर्णं तु मिश्रमन्त्रेण प्रति द्रव्यं षडानन ! ।
उत्तमादिक्रमेणैव समिधार्काङ्गुलानि च ॥ ३७० ॥

कलाङ्गुलं चोत्तमं प्रोक्तं मन्वङ्गुलं तु मध्यमम् ।
. . . . . . समिधायां तु लक्षणम्[9] ॥ ३७१ ॥

---

1. त्र्यम्बकेणैव–
2. जुहुयात्–
3. जुहुयात्–
4. जयादिम–
5. राष्ट्रभृदाहुतिं–
6. पुनश्च त्र्यम्बकेणैव–
7. प्रासाद–
8. एकैका–
9. समिद्दायामलक्षणम् (समिधायास्तु लक्षणम्)–

कर्षं कर्षार्थमात्रं च कर्षद्वयमथापि वा ।
उत्तमादिक्रमेणैव घृताहुतिमथाचरेत् ॥ ३७२ ॥

स्रुवपूर्णप्रमाणेन व्याहृतिं जुहुयात्पुनः ।
स्रुवयोगेन सम्पूर्णं पूर्णाहुतिमथाचरेत् ॥ ३७३ ॥

क्षीरं दधिमधुस्सर्पि[1]स्रुवपूर्णप्रमाणतः ।
अन्नमक्षप्रमाणेन मूलं? बिल्वस्य पत्रवत् ॥ ३७४ ॥

अपूपं च फलं चैव शमीपत्रप्रमाणतः ।
एवमेव प्रमाणेन होमं कृत्वाऽत्र षण्मुख! ॥ ३७५ ॥

होमान्ते बलिमारभ्य सर्वालङ्कारसंयुतम् ।
तरङ्ग? शिबिकायां वा रथे वारोपयेद्गुह! ॥ ३७६ ॥

वृषभं[2] पूर्वतो गच्छेद्यन्त्रदीपमनन्तरे[3] ।
गणेशं[4] यन्त्रलिङ्गं च यन्त्रदन्तिमनन्तरे[5] ॥ ३७७ ॥

यन्त्राश्च यन्त्रवाद्याश्च[6] यन्त्रनृत्तमनन्तरे[7] ।
देशिको बलिपात्रादि बलिद्रव्यमनन्तरे[8] ॥ ३७८ ॥

---

1. मधुसर्पिः–
2. वृषभः–
3. यन्त्रदीप अनन्तरम्–
4. गणेशः–
5. यन्त्रदन्ती अनन्तरम्–
6. यन्त्राणि यन्त्रवाद्यानि–
7. मनन्तरम्–
8. मनन्तरम्–

तदन्ते चास्त्रमूर्तीनामन्नलिङ्गमनन्तरे[1] ।
चन्द्रमौलि[2] तदन्ते तु सोमास्कन्दमनन्तरे[3] ॥ ३७९ ॥

नन्दीशं[4] चापरे वाऽपि दूरेवाऽपि प्रकल्पयेत् ।
भक्तबिम्बास्तदन्ते तु ब्राह्मणानामनन्तपरेति च[5] ? ॥ ३८० ॥

नृपाणां च परे गत्वा वणिज्यानामनन्तरे[6] ।
शूद्राणामपरे गत्वा पाषण्डानामनन्ते[7] ॥ ३८१ ॥

व्रतिनां चापरे गत्वा योगिनां तदनन्तरे[8] ।
समयीनां[9] तदन्ते तु वाद्यनृत्तमनन्तरे[10] ॥ ३८२ ॥

भाषाष्टादशकं स्तोत्रै[11]र्नामालङ्कारसंयुतैः ।
बलिपात्रे समासेन बलिद्रव्यं विनिक्षिपेत् ॥ ३८३ ॥

चन्दनं चाक्षतं पुष्पं धूपदीपं[12] तथैव च ।
पाद्यमाचमनं चार्घ्यं पात्रे पात्रे निधापयेत् ॥ ३८४ ॥

---

1. मूर्तयः अन्नलिङ्गमनन्तरम्–
2. चन्द्रमौलिः–
3. सोमास्कन्दः अनन्तरम्–
4. नन्दीशश्चा–
5. ब्राह्मणानामनन्तरम्–
6. वणिजामनन्तरम्–
7. मनन्तरम्–
8. तदनन्तरम्–
9. समयिनां–
10. मनन्तरम्–
11. दशकस्तोत्रैः–
12. धूपं दीपं–

लड्डुका चैव मुद्गानां गलसत्तिल[1]पिष्टकम् ।
प्रथमेऽहनिदातव्यमविघ्नश्चेति मन्त्रतः ॥ ३८५ ॥

लोकपालान् समासेन बलि नित्यं ददेद्[2]क्रमात् ।
निशि चूर्णं[3] यवं चैव पायसं तिलसंयुतम् ॥ ३८६ ॥

द्वितीयदिवसे दद्याद्ब्रह्ममन्त्रमनुस्मरन् ।
घृता च[4] तिलपिष्टं च कदलीफलसंयुतम् ॥ ३८७ ॥

तृतीयेऽहनि दातव्यं भूतमन्त्रमनुस्मरन् ।
निशिचूर्णं[5] नालिकेरं घृतोदन[6]शिखिध्वज ! ॥ ३८८ ॥

चतुर्थे दिवसे चैव गान्धर्वं मन्त्रमुच्चरन् ।
प्रियङ्गुघृतसंयुक्तमिन्द्रवल्ली शमी[7] तथा ॥ ३८९ ॥

पञ्चमेऽहनि पातव्यमैन्द्रमन्त्रमनुस्मरन् ।
वेण्वान्न[8] घृतसंयुक्तं सक्तुलाजा[9]विमिश्रितम् ॥ ३९० ॥

षष्ठमेऽहनि[10] दातव्यमृषीणां कुशया सह ।
शुद्धान्नं ब्रहती[11]युक्तं गुलसर्पिविमिश्रितम्[12] ॥ ३९१ ॥

---

1. गुलसक्तिल-
2. बलिं नित्यं दद्यात्-
3. निशाचूर्णं-
4. घृतंच-
5. निशाचूर्णं-
6. घृतोदनम्-
7. मिन्द्रवल्लीं शमीं-
8. वेण्वन्नं-
9. लाज-
10. षष्ठेऽहनि-
11. बृहती-
12. सर्पिर्विमिश्रितम्-

नवमेऽहनि दातव्यं शैवमन्त्रमनुस्मरन् ।।
येषां द्रव्यमलाभे [1] तु शुद्धान्नं दधिसंयुतम् ॥ ३९२ ॥

प्रथमादिदिनान्तं [2] च बलिद्रव्यमिहोच्यते ।
प्रथमं [3] गणनाथस्तु द्वितीयं कमलासन [4] ॥ ३९३ ॥

द्वितीयं [5] भूतरात्रं च चतुर्थं गान्धर्वमेव च [6] ।
पञ्चमं च सहस्राक्षं [7] मुनीनां षष्ठमो [8] भवेत् ॥ ३९४ ॥

सप्तमं केशवं ज्ञेयमष्टमं राक्षसं तथा [9] ।
नवमं [10] शैवमेवोक्तं दिवसानां तु देवता [11] ॥ ३९५ ॥

इन्द्रादीशानपर्यन्तं विधिदेवान् [12] षडानन! ।
गन्धर्वो प्रीतिदेवत्यमनलोज्वलनं तथा [13] ॥ ३९६ ॥

सोमदेवाश्च पञ्चैते बलिद्रव्याधिदेवताः ।
सावित्री शक्करी चैव जगती च गायत्रिकम् [14] ॥ ३९७ ॥

---

1. एषां द्रव्याणामलाभे-
2. नवान्तं-
3. प्रथमे-
4. द्वितीये कमलासनः-
5. तृतीये-
6. चतुर्थे गन्धर्व एव च-
7. पञ्चमेच सहस्राक्षः-
8. षष्ठे-
9. सप्तमे केशवो ज्ञेयः अष्टमे राक्षसस्तथा-
10. नवमे-
11. देवताः-
12. विद्धिदेवान्-
13. गन्धर्वः प्रीतिदैवत्यं अनिलोज्वलनस्तथा-
14. गायत्रिका-

रुद्रः पितामहो विष्णुरीश्वरः शिव एव च ।
विघ्नेशादीशपर्यन्तं भौतिकस्तदुदाहृतः ॥ ३९८ ॥

वैनवादिशिवान्तं तु यद्गौणं सम्प्रशस्यते ।
शैवे शैवाधिदेवत्यमेवं दिनाधिपः स्मृतः ॥ ३९९ ॥

दिनाधिदेवबीजं तु सन्धिदेवान् स्वनामतः ।
प्रणवादिनमोऽन्तं च मन्त्राः[1] प्रतिदिनं वदेत् ॥ ४०० ॥

बलिं दद्याद्विशेषेण दिनं प्रति दिनं प्रति ।
यागस्थानमनुप्राप्य पादप्रक्षालनं कुरु ॥ ४०१ ॥

आयुधानस्त्रमूर्तिं च विन्यसेद्वेदिकोपरि ।
अन्यलिङ्गं विसृज्याथ बाह्यपीठे विशेषतः ॥ ४०२ ॥

आस्थानमण्टपे वत्स! कौतुकं विन्यसेत्क्रमात् ।
दिने दिने विशेषेण भवानीं पूजयेद्गुह! ॥ ४०३ ॥

[2]उमया सहितं चन्द्रशेखरं प्रथमेऽहनि ।
सुखासनहरिरर्धं[3] द्वितीयदिवसे ततः ॥ ४०४ ॥

तृतीये चार्धनारी च[4] गङ्गावरं[5] तथैव च ।
कल्यानासुन्दरं चैव वृषारूढं तथैव च ॥ ४०५ ॥

---

1. मन्त्रान्–
2. अस्मिन्नुत्सवप्रकरणे चतुर्थषष्ठदिनयोरनुत्कीर्तनात् तद्दिनयोः कर्तव्योत्सवपरिचयो न भवति । किञ्च सप्तमाष्टमदिनयोः कर्तव्योत्सवौ व्युत्क्रमेण निरूपितौ वर्तेते ।
3. सुखासनं हरेरर्धं–
4. नारीं व–
5. गङ्गाधरं–

चण्डेशानुग्रहमुमासंवादमूर्तिनम् ? ।
नन्दिकेश्वरमारूढं पञ्चमे दिवसे विदुः ॥ ४०६ ॥

उन्मत्तभैरवाकारं विषाशी [1] त्रिपुरान्तकम् ।
अष्टमे दिवसे वत्स! उत्सवं तत्र कारयेत् ॥ ४०७ ॥

कौलिह कौलहारी च? गजोद्भिन्नार्धकं हरम् ।
सप्तमे दिवसे वत्स! विशेषं चोत्सवं गुह! ॥ ४०८ ॥

अष्टमे वा नवाहे वा उत्सवं तत्र कारयेत् ।
भुजङ्गत्रासरूपं वा भुजङ्गललितं तु वा ॥ ४०९ ॥

भुजङ्गभैरवं वाऽथ भुजङ्गवलयं तु वा ।
भुजङ्गकुञ्चितं वृत्तं पञ्चभेदमिहोच्यते ॥ ४१० ॥

पञ्चाहे वाऽथ सप्ताहे कारयेदङ्कुरार्पणम् ।
उत्सवं पूर्वरात्रौ च स्नपनं गन्धतोयकैः ॥ ४११ ॥

कौतुकं बन्धयेद्वत्स [2]! दिनदेवान् [3] विशेषतः ।
पूर्वाह्ने वाऽथ पराह्ने वा [4] प्रदोषे रात्रिकेऽपि वा ॥ ४१२ ॥

बलिहोम . . . . ना वत्स! कारयेच्छाम्भवोत्सवम् ।
आस्थानमण्टपे वेश्य [5] परिवेषक्रमेण तु ॥ ४१३ ॥

शिवाग्रे पश्चिमे बाह्ये दक्षिणे वा तथैव च ।
त्रिपथे चतुष्पथे वाऽपि सभास्थानेऽथवा पुनः ॥ ४१४ ॥

---

1. विषाशिनम्–
2. बध्नीयाद्वत्स!
3. दिनदेवानां–
4. वाऽपराह्ने वा–
5. उपवेश्य–

तीर्थतीरेऽथ केदारे चान्यदेशे मनोरमे ।
धामस्य[1] दक्षिणे सव्ये पूर्वे वा चोत्तरे ततः ॥ ४१५ ॥

धामस्य[2] दक्षिणे सव्ये दक्षिणाभिमुखं क्रमात् ।
सव्ये तु प्राङ्मुखो भूत्वा चास्थानमण्टपं कुरु ॥ ४१६ ॥

चतुर्विंशतिहस्तैर्वा हस्तैर्विंशतिरेव वा[3] ।
षोडशैर्द्वादशैर्हस्तैर्द्विजातीनामनुक्रमात् ॥ ४१७ ॥

विस्तारं सप्तधा कृत्वा प्राङ्मुखोदङ्मुखं क्रमात् ।
नवांशं मध्यमे कुर्याद्भित्तिपादार्धमानवित् ॥ ४१८ ॥

अथ . . . त्रिपादं वा मुखयाममिहोच्यते[4] ।
षोडशस्तम्भसंयुक्तं द्वादशस्तम्भमेव वा ॥ ४१९ ॥

शतपादयुतान्तं वा कारयेद्देवमेव[5] तु ।
पञ्चपङ्क्तिस्त्रिपङ्क्तिर्वा[6] कारयेत्तु विधानतः ॥ ४२० ॥

मण्टपं वा प्रपां वाऽपि कारयेत्तु विशेषतः ।
अधिष्ठाननिवासस्थ? मण्टपानां तु लक्षणम् ॥ ४२१ ॥

अन्तस्तम्भं चतुष्कोणं त्याज्यं सर्वत्र मण्टपम् ।
बाह्ये परिवृतान् छिद्रान् वैकर्तनादिकान् न्यसेत् ॥ ४२२ ॥

---

1. धाम्नः–
2. धाम्नः–
3. विंशत्यामेव वा–
4. मुखायाम इहोच्यते–
5. देवमेव–
6. पञ्चपङ्क्तिं त्रिपंक्तिं वा–

प्रपां कृत्वा तु सर्वाग्रे कलास्तम्भयुतैः क्रमात् ।
नारायणाय गोविन्दो वासुदेवं[1] तथैव च ॥ ४२३ ॥

माधवो मधुसूदं च[2] प्रद्युम्नश्चानिरुद्धकः ।
हरिवक्त्रो गदाधारी धाक्ष्यद्वयं? तथैव च ॥ ४२४ ॥

देवामति? तथा चैव श्रीवत्साङ्कं च शार्ङ्गिणम्[3] ।
मुञ्जकेशो मुरारी च[4] वैनतेयोपरि स्थितः ॥ ४२५ ॥

पुण्डरीकाक्षनामानि पूजयेत्प्रतिपादके ।
वितानदर्भमाल्यैश्च दिग्ध्वजैः परिलम्बयेत् ॥ ४२६ ॥

चतुर्वेदमयं सर्वे[5] गन्धाद्यैश्च समर्चयेत् ।
ब्रह्म[6]दैविकमानुष्यं पैशाचं च पदक्रमात् ॥ ४२७ ॥

ब्रह्मिरे[7] स्थापयेद्देवं चण्डेशं दैविके परे ।
मानुषे[8] नृत्तवाद्यादीन् पैशचे प्रैष्यकादिना[9] ॥ ४२८ ॥

रङ्गपूजा प्रकर्तव्यं[10] दक्षादेवि विबन्धयेत्? ।
पादुकं[11] शङ्खपात्रं च अर्घ्यमाचमनं तथा ॥ ४२९ ॥

---

1. वासुदेवः–
2. मधुसूदनश्च–
3. श्रीवत्साङ्कश्च शार्ङ्गी–
4. मुरारिश्च–
5. सर्वं–
6. ब्राह्म–
7. ब्राह्मिके–
8. मानुष्ये–
9. प्रैष्यकादीन्–
10. प्रकर्तव्या–
11. पादुके–

गन्धं च वस्त्र[1]पुष्पं च धूप[2]दीपं तथाञ्जनम् ।
दर्पणं चामरं चैव—द्यादीनां तु धारयेत् ॥ ४३० ॥

प्रादक्षिण्यक्रमेणैव विन्यसेत्तु दिने दिने ।
मण्टपस्य तु तन्मध्ये—ंसिहमाननम्[3] ॥ ४३१ ॥

आसीनस्थं[4] महादेवं त्र्यम्बकेन[5] तु पूजयेत् ।
स्नपनं कारयेदह्नि आदिरात्रौ तु रात्रिके ॥ ४३२ ॥

प्रथमं[6] चन्दनं कुर्यात् द्वितीयं[7] कुङ्कुमं तथा ।
तृतीयदिवसे कोष्ठं चतुर्थे जातिगन्धकम्[8] ॥ ४३३ ॥

उशीरं चैव कचालं लवङ्गं चन्दनं तथा ।
कर्पूरचन्दनं हैमं युक्तं[9] षष्ठदिनं तथा[10] ॥ ४३४ ॥

एला चैव लवङ्गं च चन्दनागरुसंयुतम् ।
सप्तमा[11]दिवसे चैव गन्धमि[12]त्यभिधीयते ॥ ४३५ ॥

---

1. वस्त्रं–
2. धूपं–
3. मासनम्–
4. आसनस्थं–
5. त्र्यम्बकेण–
6. प्रथमे–
7. द्वितीये–
8. अभिषेकप्रकरणेऽस्मिन् पञ्चमनवमदिनयोः अकीर्तनात् तद्दिनसम्बन्धि-द्रव्यपरिचयो न भवति ।
9. हेमयुक्तं–
10. दिने तथा–
11. सप्तमे–
12. गन्धइ–

वनं कुङ्कुमकर्पूरं कुटजातिमुरं तथा ।
हेमं चागरुसारं च[1] अष्टमे दिवसे गुह ! ॥ ४३६ ॥

कर्पूरचन्दनं चैव गन्धमि[2]त्यभिधीयते ।
पद्मं नीलोत्पलं जाति[3]मल्लिकाचोत्पलं तथा ॥ ४३७ ॥

पाटकं चार्कपुष्पं च करवीरं च कं[4] तथा ।
नवैतानि च पुष्पाणि पूजयेत्तु दिने दिने ॥ ४३८ ॥

गुग्गुलं च लघुं चैव कुङ्कुमं चन्दनं तथा ।
बिल्वानां चैव निर्यासं कर्पूरोशीरकं तथा ॥ ४३९ ॥

मधु घृतगुलं मिश्रं सर्वेषु च षडानन ! ।
दिने दिने विशेषेण धूपं दद्याद्विशेषतः ॥ ४४० ॥

मुखवासं च ताम्बूलं ददेन्नित्यं[5] शिखिध्वज ! ।
भृङ्गारहासकरुणाद्भुतस्य–भयानकम्[6] ॥ ४४१ ॥

बीभत्सभूतशान्तिश्च[7] दिने दिने विशेषतः ।
नव नाट्यदिने कुर्याद्देवदेवस्य सन्निधौ ॥ ४४२ ॥

षड्जं च ऋषभं चैव निषादं गान्धारदेवतम् ।
तथा मध्यमं पञ्चमं चेति कौमारं? चेति सप्तधा ॥ ४४३ ॥

---

1. हेम चागरुसारश्च–
2. गन्ध इ–
3. जातिः–
4. पिच्छकं–
5. दद्यान्नित्यं–
6. शृङ्गारवीरकरुणाद्भुतहास्यभयानकान्–
7. बीभत्सरौद्रशान्तांश्च–

नवनाट्यं गमं? चैते गाना? सप्तस्वराः स्मृताः ।
भेरीं च मर्द्दलं चैव झल्लरी[1]मुखं तथा? ॥ ४४४ ॥

डुक्का डक्का च वल्ली च वेणु वीणा तथा नव[2] ।
कुर्यात्पञ्चमहायज्ञं [शब्दं][3] श्रावयेत्तु दिने दिने ॥ ४४५ ॥

काध्नं[4] प्रथमं नाट्यं मण्डनं तु द्वितीयकम् ।
तृतीयं जलन्धरघ्नं त्वघघ्नं तु चतुर्थकम् ॥ ४४६ ॥

पञ्चमं दक्षयागं च षष्ठमं[5] तद्विलासकम् ।
सप्तमं कालकोपं च त्रिपुरघ्नं तथाष्टकम् ॥ ४४७ ॥

चण्डेशानुग्रहं पश्चान्नवैते दिनवाद्यकम् ।
नादं कालं च शब्दं च मानमर्द्दं तथैव च ॥ ४४८ ॥

तालं दिव्यं च नृत्तं च गाने घ[6]नवधा रसम्[7] ।
विघ्नेशादीशपर्यन्तं श्रावयेद्देवसन्निधौ ॥ ४४९ ॥

लक्षणेन तु कर्तव्यमलक्ष्यमशुभावहम् ।
तोरणं मकरं चैव पुष्पप्रभा तथैव च ॥ ४५० ॥

पुष्पदाम गजारूढं सिंहारूढं ततः परम् ।
यन्त्रलिङ्गं च रङ्गं च मृगयात्रा तथैव च ॥ ४५१ ॥

---

1. झल्लरीं–
2. डुक्कांढक्कां च वल्ली च वेणुं वीणां तथा नव–
3. अत्र शब्दमित्यधिकांशः–
4. कालघ्नं–
5. षष्ठं–
6. गाने च–
7. रसः–

एवं दिने दिने कुर्याद्गणेशादिशिवान्तकम् ।
रथारोहं विशेषेण कारयेल्लक्षणान्वितम् ॥ ४५२ ॥

सर्वालङ्कारसंयुक्तं सर्वातोद्यसमायुतम् ।
इक्षुदण्डं च खण्डं च पृथुकापूपमेव च ॥ ४५३ ॥

ग्रामप्रदक्षिणं कुर्याद्विघ्नेशं पूजयेत्ततः ।
दारुसङ्ग्रहणं कुर्याल्लक्षणेन समन्वितम् ॥ ४५४ ॥

रथं कृत्वाऽत्र वै वत्स! दृढं वै शिल्पिना सह ।
गव्येन स्नापयेद्विद्वान् पुनः पुण्याहमाचरेत् ॥ ४५५ ॥

होमं कृत्वा चतुर्दिक्षु विधिना मन्त्रमाचरेत् ।
नानावस्त्रैरलङ्कृत्य गन्धमाल्यैश्च भूषयेत् ॥ ४५६ ॥

देवेशं गन्धतोयेन स्नापयेत्तु विचक्षणः ।
वस्त्रैराभरणैर्गन्धैः पुष्पधूपं च[1] पूजयेत् ॥ ४५७ ॥

पायसान्नं ददेत्पश्चा[2]त्ताम्बूलं च निवेदयेत् ।
तदग्रे स्थण्डिलं कुर्यात्पूर्वोक्तविधिना सह ॥ ४५८ ॥

लघुचन्दनकुष्ठं च घनं कर्पूरमेव च ।
उशीरं जातिपत्रं च बकुलं गुळमेव च ॥ ४५९ ॥

एतानि समचूर्णानि मर्दयेद्धिमतोयकैः ।
धूपयेदगरुं तत्र नववस्त्रेण वेष्टयेत् ॥ ४६० ॥

स्थण्डिलस्य तु मध्ये तु विन्यसेत्तु शिखिध्वज! ।
पूण्डरीकाञ्जनं पूर्वे कुङ्कुमं दक्षिणे न्यसेत् ॥ ४६१ ॥

---

1. पुष्पधूपैश्च–
2. दद्यात्पश्चा–

क्षुरिकां दक्षिणे भागे पादजालं तथोत्तरे ।
पादुकेन पुरीं त्यक्त्वा नववस्त्रेण वेष्टयेत् ॥ ४६२ ॥

स्थण्डिलस्य तु मध्ये तु विन्यसेत्तु शिखिध्वज ! ।
न्यस्त्वा कनकनैरुते[1] . . . . . . ॥ ४६३ ॥

बकपुष्पं हारकेयूरं विन्यसेद्वायुदेशके ।
यज्ञसूत्रं तथैशान्ये विन्यसेत्तु क्रमेण तु ॥ ४६४ ॥

कलाटपट्टमैन्द्रे तु कुण्डले पावके न्यसेत् ।
भस्माधारं तथा याम्ये बाहुमालां च नैररुते[2] ॥ ४६५ ॥

वारुणे पादकटकं नूपुरं वायवे[3] गुह ! ।
कर्णिका ? विन्यसेच्छत्रं चामरं चैशके न्यसेत् ॥ ४६६ ॥

गन्धादीन् पूजयेत्सर्वान्[4] कामबीजमनुस्मरन् ।
पुण्याहं वाचयेत्तत्र कौतुकं बन्धयेत्पुनः ॥ ४६७ ॥

धामप्रदक्षिणं कुर्यात्सर्वालङ्कारसंयुतम् ।
देवदेवि[5] विशेषेण भूषणादीनि[6] भूषयेत् ॥ ४६८ ॥

सुमुहूर्ते सुलग्ने तु गन्धमालेपनं[7] गुह ! ।
पूजयेत्पुष्पधूपाद्यैर्मुद्गान्नं दापयेत्ततः ॥ ४६९ ॥

---

1. कनकं नैर्ऋते–
2. नैर्ऋते–
3. वायव्ये–
4. गन्धादिभिः पूजयेत्सर्वैः–
5. देवं देवीं–
6. भूषणादिभिः–
7. गन्धेनालेपनं–

मुखवासं च ताम्बूलं दापयेद्धृदयेन तु ।
रथं वा[1] शिबिकायां वा रोपयेत्तु विशेषतः ॥ ४७० ॥

ग्रामप्रदक्षिणं कुर्यात्सभास्थाने प्रवेशयेत् ।
प्रातः काले चरेद्ध्वमास्थानं सम्प्रवेशयेत् ॥ ४७१ ॥

स्नपनं कारयेत्पश्चान्महाहविर्निवेदयेत् ।
नृत्तगीतं[2] च वाद्यं च स्तोत्रमन्त्रैश्च पूजयेत् ॥ ४७२ ॥

रथमारोपयेद्रात्रौ कुर्याद्ग्रामप्रदक्षिणम् ।
पुनःस्थानं प्रविश्याथ नवधा स्नापनोक्तवत् ॥ ४७३ ॥

प्रभूतहविषं[3] दत्त्वा स्थापयेत्पूर्वदेशके ।
बरयन्तं चोत्सवं कुर्यात्पूर्वोक्तेन विधानतः ॥ ४७४ ॥

मृगयात्रां तु कर्तव्यं[4] तद्दिनापराह्णके ।
किरातार्जुनरूपं तु त्रिपुरान्तकमेव वा ॥ ४७५ ॥

ग्रन्थि कौतुकरद्रूपं तद्गात्रे स्नपनं कुरु ।
किरातरूपवत्सर्वान् विशेषान्वेषधारयेत् ? ॥ ४७६ ॥

गजं चाश्वमृगं चैव वराहं च पिकं पुनः ।
मयूरकुक्कुटादीनि[5] पक्षीन्नानाविधैर्ग्रहेत्[6] ॥ ४७७ ॥

---

1. रथे वा–
2. नृत्तं गीतं च–
3. प्रभूतं हविः–
4. मृगयात्रा तु कर्तव्या–
5. कुक्कुटादीन्–
6. विधैर्गृह्णीयात्–

धनुर्बाणं च खड्गं च छुरिकादीनि धारयेत् ।
केचिदूर्ध्वाश्रमे चैव केचिदूर्ध्वसमोऽपि वा ? ॥ ४७८ ॥

केचित्पिञ्छं तु सङ्गृह्य [1] शीघ्रं गच्छेत्समाकुलम् [2] ।
तद्रात्रौ चापरात्रौ च बन्धयेत्कौतुकं हृदा ॥ ४७९ ॥

मूललिङ्ग च शूलं च सर्वान् बिम्बान् विशेषतः ।
तीर्थसङ्ग्रहणं चैव रात्रान्ते तु विचक्षणः ॥ ४८० ॥

स्नापयेदस्त्रराजानं [3] नव कुम्भान् विशेषतः ।
तीर्थं कुर्यात्तु तत्रैव नव वस्त्रेण वेष्टयेत् ॥ ४८१ ॥

गन्धादीनर्चयेत्पश्चान्नेवेद्य [4] दापयेत्पृथक् ।
प्रभाते विमलेधीमान्नित्यसन्ध्यावसानके ॥ ४८२ ॥

होमान्ते चोत्सवं कुर्यादास्थानमण्टपं नयेत् ।
तस्याग्रे स्थण्डिलं कुर्यात्पूर्वोक्तविधिना सह ॥ ४८३ ॥

स्थण्डिलं कारयेद्विद्वानस्त्रमन्त्रमनुस्मरन् ।
लूखलं [5] मुसलं शूलं स्थण्डिलोपरि विन्यसेत् ॥ ४८४ ॥

त्यक्त्वा पर्युषितं पुष्पं पूजां पूर्ववदाचरेत् ।
पुण्याहं तत्र कर्तव्यं [6] प्रोक्षयेदस्त्रमन्त्रतः ॥ ४८५ ॥

---

1. सङ्गृह्य–
2. गच्छेयुस्समाकुलम्–
3. राजं–
4. नैवेद्यं–
5. उलूखलं–
6. पुण्याहस्तत्र कर्तव्यः–

नववस्त्रेण लङ्कृत्य[1] लूखलं[2] मुसलं तथा ।
बिल्वमपामार्गं दूर्वाश्रीपत्रमूलया ? ॥ ४८६ ॥

वेष्टयेलूखलं[3] तत्र मुसलं च तथैव च ।
वाचयेच्छुद्ध[4]पुण्याहं घोषयेत्तु विचक्षणः ॥ ४८७ ॥

घृतशिरोऽर्पणं कुर्याद्दूर्वाङ्कुराक्षतैरपि ।
मूलं शूलं तथा बेरं लूखलं[5] न ददेत्क्रमात्[6] ॥ ४८८ ॥

सुशुष्कां रजनीं शुद्धां चूर्णं कृत्वाढकत्रयम् ।
तदर्धं मध्यमं ज्ञेयं तस्यार्धमधमं विदुः ॥ ४८९ ॥

तैलस्यैवं प्रमाणानि तथैव परिकल्पयेत् ।
लूखलं[7] विन्यसेच्चूर्णं निक्षिप्यं देशिकं पुनः[8] ॥ ४९० ॥

कर्तारसमयानां च दासीदासकुटुम्बयेत् ? ।
ताम्बूलैश्चैव चूर्णैश्च[9] तैलं चैव ददेत्क्रमात्[10] ॥ ४९१ ॥

नित्यनैमित्तिकं चैव एवमेव समाचरेत् ।
चूर्णोत्सवक्रमं कुर्यान्नवं तत्रैव विन्यसेत् ॥ ४९२ ॥

---

1. वस्त्रेणालङ्कृत्य-
2. उलूखलं-
3. उलूखलं-
4. च्छुद्धि-
5. उलूखलं-
6. दद्यात् क्रमात्-
7. उलूखलं-
8. निक्षिप्य देशिकः पुनः-
9. ताम्बूलं चैव चूर्णं च-
10. दद्यात् क्रमात्-

पिधानकूर्चवस्त्राढ्यं विन्यसेत्तु यथाविधि ।
त्यक्त्वा प्रतिसरं पूर्वं सूत्रमत्रैव षण्मुख! ॥ ४९३ ॥

स्नापयेत्स्नपनं पश्चात्तीर्थस्नानमनन्तरे[1] ? ।
यत्तीर्थं तीरमावेश्य तत्तीरे दशदण्डके ? ॥ ४९४ ॥

शूलं च देशिकं चैव जनान् सर्वान् विशेषतः[2] ।
सह स्नानं तु यत्कुर्यात्सर्वपापैः प्रमुच्यते ॥ ४९५ ॥

शुद्धं शुद्धेति मन्त्रेण पूजयेदस्त्रदैवतम् ।
ग्रामप्रदक्षिणं कुर्याद्ब्रह्मघोषसमायुतम् ॥ ४९६ ॥

प्रविशेदालयं पश्चाद्यागमण्टपमाविशेत् ।
कुम्भान् कुण्डानि सम्पूज्य गन्दादीनि[3] यथाक्रमम् ॥ ४९७ ॥

पूर्णाहुतिं ततः कुर्याच्छेषद्रव्याणि[4] देशिकः ।
अग्निमूर्तिं विसृज्याथ पूजयेद्यागमूर्तिनम्[5] ॥ ४९८ ॥

यागेशाश्चास्त्रराजानां[6] प्रासादे तु प्रदक्षिणम् ।
प्रविशेद्गर्भगेहं तु स्थापयेत्तु शिवाग्रके ॥ ४९९ ॥

लिङ्गं शुद्धिं[7] ततः कुर्यादासनं कल्पयेत्पुनः ।
यागेशं योजयेल्लिङ्गे वर्धिनीं पिण्डिकोपरि ॥ ५०० ॥

---

1. मनन्तरम्–
2. देशिकश्चैव जनास्सर्वे विशेषतः–
3. गन्धादिभिः–
4. च्छेषद्रव्यैः–
5. द्यागमूर्तिम्–
6. यागेशानस्त्रराजांश्च–
7. लिङ्गशुद्धिं–

लोकपालघटान् न्यस्त्वा दशे दशे विचक्षणः ।
स्नपनं च ततः कुर्यादष्टोत्तरशतेन तु ॥ ५०१ ॥

प्रभूतहविषं [1] दत्त्वा ताम्बूलं तु निवेदयेत् ।
चण्डेशं पूजयेद्रात्रौ चण्डगायत्रिमुच्चरन् ॥ ५०२ ॥

स्नपनं नवकुम्भेन स्नापयेत्तु विशेषतः ।
वृषस्यां तु विषये त्रि वृषदेवं प्रपूजयेत्? ॥ ५०३ ॥

वृषगायत्रिमुच्चार्य वृषमूलेन पूजयेत् ।
गन्धानिनर्चये[2]द्विद्वान् वृषवृषं स विसर्जयेत्? ॥ ५०४ ॥

ध्वजावरोहणं पश्चाद्दण्डं टङ्केन छेदयेत् ।
वास्तुदेवान् बलिं दद्याद्यथापूर्ववदेव तु ॥ ५०५ ॥

विसर्जयेत्क्रमेणैव तत्तद्वास्तुपदान्तरे? ।
चण्डेशं तु पुनः कुर्याच्छुद्धस्नानमनन्तरम् ॥ ५०६ ॥

महाहविं [3] ततः कुर्याद्यथाश्रद्धानुसंयुतः ।
गौरीयागं ततः कुर्यादेकाहं तु त्र्यहं तु वा ॥ ५०७ ॥

भक्तोत्सवं समारभ्य भक्तबिम्बान् प्रपूजयेत् ।
पादुकायन्त्रबिम्बं वा भक्तानां बेरमेव च ॥ ५०८ ॥

कौतुकं बन्धयेत्पूर्वरात्रौ चैवाधिवासयेत् ।
बलिहोमं विना वत्स! कारयेदुत्सवं ततः ॥ ५०९ ॥

---

1. प्रभूतहविः–
2. गन्धादिनाऽर्चये–
3. महाहविः–

स्नापयेन्मूललिङ्गे तु[1] महाहविर्निवेदयेत् ।
देशिकं पूजयेत्पश्चाद्दैवज्ञं पूजयेत्ततः ॥ ५१० ॥

भक्तानां परिवाराणां[2] जनान् सर्वान् प्रपूजयेत् ।
शिवोत्सवमिति ख्यातमब्दं[3] प्रति भवेदुह ! ॥ ५११ ॥

आयुष्यं विभवं पुत्रं पौत्रान् सर्वान्विवर्धयेत् ।
राजाराष्ट्रहितं[4] सर्वं भूतानां[5] तु हितं मतम् ॥ ५१२ ॥

शिवसायुज्यमाप्नोति शिववत्सह मोदते ॥ ५१३ ॥

इति वातुलभेदे महामुखाख्ये
शिवोत्सवपटलः ॥

O.R.I. Mss. P. Book No. 174 (1–30 पत्राणि)

1. लिङ्गं तु–
2. भक्तान् परिवारान्–
3. शिवोत्सव इति ख्यातः अब्दं–
4. राजराष्ट्रहितम्–
5. सर्वभूतानाम्–

—o—

# शिवलिङ्गप्रतिष्ठाविधिः

—o—

स्कन्द उवाच—

त्रिलोचन! नमस्तुभ्यं नमस्ते वृषभध्वज! ।
शिवलिङ्गप्रतिष्ठा च सम्यगुक्तं[क्ता] त्वया शिव! ॥ १ ॥

इदानीं श्रोतुमिच्छामि बाणलिङ्गादिभेदतः ।
प्रतिष्ठा[ष्ठां] तद्विधिं चैव विस्तरेण वद प्रभो! ॥ २ ॥

ईश्वर उवाच—

शृणु पुत्र! प्रवक्ष्यामि शिवलिङ्गा[1]दिभेदतः ।
प्रतिष्ठां तद्विधानं च विस्तरेण यथाक्रमम् ॥ ३ ॥

कर्षणादि प्रकुर्वीत देशे ग्रामे मनोरमे ।
शिलादिनिर्मितं गेहं यथाशोभं नवं दृढम् ॥ ४ ॥

लक्षणं कारयेद्वत्स! पूर्वोक्तेन विधानतः ।
प्राकारमण्डपानां च यथाविभवविस्तरम् ॥ ५ ॥

देवालयं प्रकुर्वीत शिवलिङ्गं समाहरेत् ।
तत्पीठं पञ्चसूत्रादि सर्वोक्तैर्लक्षणैः क्रमात् ॥ ६ ॥

लिङ्गं सङ्गृह्य भक्त्याऽथ ग्रामं[मे] वा राष्ट्र[ए] मेव च ।
शिबिकायां समारोप्य वेष्टयेद्वस्त्रभूषणैः ॥ ७ ॥

---

1. बाणलिङ्गा–

गन्धपुष्पं[ष्पैः] समभ्यर्च्य उत्सवं कारयेद्गुरुः ।
ईशान्यां स्थापयेत्पश्चाज्जलेऽन्नेवाधिवासयेत् ॥ ८ ॥

स्थापयेद्विविना वत्स! दिनशोधनमाचरेत् ।
माघफाल्गुनवैशाखज्येष्ठमासादिकेषु च ॥ ९ ॥

शुभवारे शुभे लग्ने चन्द्रवारानुकूलके ।
समालोच्य नियुञ्जीत प्रतिष्ठाकर्म कारयेत् ॥ १० ॥

एकरात्रं त्रिरात्रं वा पञ्चरात्रमथापि वा ।
सप्ताहं नवरात्रं वा प्रतिष्ठां च सुतोत्तम! ॥ ११ ॥

रेचयेन्मण्डपैः पश्चात्पञ्चहस्तादिभेदतः ।
देवाग्रे [ग्र]ईशानदेशे वा पूर्वोक्तेन सुतोत्तम! ॥ १२ ॥

एककुण्डं त्रिकुण्डं वा पञ्चकुण्डमथापि वा ।
सप्तकुण्डं नवं वाथ एकरात्रादिभेदतः ॥ १३ ॥

कुण्डं च कारयेद्वत्स! द्वारतोरणभूषितैः ।
प्रतिष्ठार्थं प्रकुर्वीत यथादृष्टिमनोहरम् ॥ १४ ॥

देशिको यजमानाद्यैः समाहूतः प्रतोष्य च ।
सर्वाङ्गं मुण्डनं कुर्युः कर्मार्थं च सुतोत्तम! ॥ १५ ॥

नदीं गत्वाऽथ सुस्नात्वा [1] मृत्तिकास्नानपूर्वकम् ।
ततो देवालयं गत्वा स्वस्तिवाचर[न]मारभत् [2] ॥ १६ ॥

गणेशं पूजयेदादौ स्वर्णपुष्पादिकैः फलैः ।
ततः सङ्कल्प्य कर्मार्थं नान्दीपुण्याहमाचरेत् ॥ १७ ॥

---

1. सुस्नाय-
2. मारभेत्-

मधुपर्कं ततः कृत्वा वस्त्रहेमाङ्गुलीयकैः ।
विप्रमुख्यांश्च वरयेद्विधिवद्देशिकोत्तमः ॥ १८ ॥

अङ्कुरार्थं प्रकुर्वीत मृदं सङ्गृह्य देशिकः ।
ब्राह्मणान् भोजयेत्पश्चात्तद्रात्रौ देशिकोत्तमः ॥ १९ ॥

पुण्याहं वाचयेत्तत्र गणेशार्चनपूर्वकम् ।
आचार्यं प्रार्थयेत्कर्ता पश्चात्सह परिग्रहेत्[1] ॥ २० ॥

शिल्पि[2] सन्तोष्य तद्गेहं प्रार्थयेच्च सुतोत्तम ।
पञ्चोपचारैरभ्यर्च्य बलिं दद्यात्समन्ततः ॥ २१ ॥

यागमण्डपशुद्धिं च स्थापयेत्कलशांस्ततः ।
दिक्पालध्वजपूजां च द्वारतोरणपूर्वकम् ॥ २२ ॥

होमयेद्वा[3]स्तुराक्षोघ्नं बलिं वास्तोस्स[4]माचरेत् ।
रक्षाबन्धं प्रकुर्वीत अस्त्रमन्त्रेण देशिकः ॥ २३ ॥

बीजनिर्वापणं पश्चादङ्कुरार्पणमेव च ।
ततः पीठांत्व[5]मादाय क्षालयेन्मूलमन्त्रतः ॥ २४ ॥

निधिं कुम्भं चेष्टकाख्यशिलां संस्थापयेत्सुत! ।
भूपीठं विन्यसेत्पश्चान्नवरत्नं सुतोत्तम ॥ २५ ॥

---

1. परिगृह्णीयात्–
2. शिल्पिनं–
3. जुहुयाद्वा–
4. वास्तुनस्य–
5. पीठान्त–

दिग्विदिक्षु च मध्ये तु प्रागादिषु यथाक्रमम् ।
पुनः पीठद्वयं स्थाप्य[1] तत्तन्मन्त्रैर्गुरूत्तमः ।। २६ ।।

सम्पूज्य गन्धपुष्पैश्च मधुपर्कादिभिः सुत! ।
कौतुकं बन्धयेत्पश्चादाचार्यादिद्विजैः सह ।। २७ ।।

अधिवासं ततः कुर्यादाचार्यो यजमानकः ।
तल्लिङ्गं च समादाय सर्ववाद्यरवैस्सह ।। २८ ।।

स्वस्तिसूक्तैर्यथामन्त्रैर्देशिको ग्राहयेत्ततः ।
शुद्धिं कृत्वाऽथ तल्लिङ्गं क्षालनाद्यैर्यथाक्रमम् ।। २९ ।।

विन्यसेद्वारुणे भागे स्थण्डिलोपरि देशिकः ।
जलाधिवासनं कृत्वा पूर्वोक्तेन विधानतः ।। ३० ।।

होमये[2]न्मूलमन्त्रेण पूर्णाहुतिमथाचरेत् ।
तल्लिङ्गं च समादाय मूलमन्त्रैर्गुरूत्तमः ।। ३१ ।।

उद्वृत्यामलकीचूर्णैं रुद्रसूक्तैस्ततः परम् ।
सिञ्चेत्तन्नामभिः कुम्भैर्वारुणाख्यादिमन्त्रकैः ।। ३२ ।।

पञ्चोपचारैरभ्यर्च्य सुगन्धकुसुमाक्षतैः ।
लिङ्गमादाय मूलेन विन्यसेच्छाङ्करे[3] दिशि ।। ३३ ।।

धान्यराशौ निगूह्याथ भूसूक्तेन ततः परम् ।
होमये[4]न्मूलमन्त्रेण सेचयेत्कलशोदकैः ।। ३४ ।।

---

1. स्थापयित्वा–
2. जुहुया–
3. च्छाङ्कर्यां–
4. जुहुया–

उपचारैस्समभ्यर्च्य तण्डुले च ततः परम् ।
निगूहयेन्मुहूर्तान्ते मूलमन्त्रेण होमयेत्[1] ॥ ३५ ॥

कलशैः स्नापयेद्भक्त्या पूजयेच्च शिखिध्वज! ।
फलपुष्पैर्निगूह्याथ मुहूर्तान्तं गुरूत्तमः ॥ ३६ ॥

तन्मूलेनैव हुत्वाऽथ सेचयेत्कलशोदकैः ।
शय्यां विन्यस्य पर्यङ्के लिङ्गं तत्र विनिक्षिपेत् ॥ ३७ ॥

होमये[2]न्मूलमन्त्रेण स्नापयेत्कलशोदकैः ।
पञ्चोपचारैरभ्यर्च्य विनिद्रां कारयेत्सुत! ॥ ३८ ॥

वेदमङ्गलनिर्घोषैराचार्यो ऋत्विजैः[3] सह ।
ततः प्रातः समुत्थाय नित्यकर्मादिकान् क्रियान्[4] ॥ ३९ ॥

निर्वर्त्य प्राग्विशेषेद्देहं पुण्याहं वाचयेत्ततः ।
होमयेच्छक्ति[5]तत्त्वं च तत्तत्कुम्भांश्च विन्यसेत् ॥ ४० ॥

पूर्णाहुतिं ततः कृत्वा सम्पातं चार्चयेद्गुरुः ।
सुमुहूर्ते तु सम्प्राप्ते सर्ववाद्यरवैः सह ॥ ४१ ॥

वेदघोषैः स्वस्तिसूक्तैर्भूसुरैः सह देशिकः ।
गृहीत्वा चैव तल्लिङ्गं शिबिकोपरि विन्यसेत् ॥ ४२ ॥

---

1. जुहुयात्–
2. जुहुया–
3. ऋत्विग्भिः–
4. नित्यकर्मादिकाः क्रियाः–
5. जुहुयाच्छक्ति–

गेहं प्रदक्षिणीकृत्य द्वारे चार्घ्यं समाचरेत् ।
लिङ्गमतः प्रविश्याय[1] मूलमन्त्रमनुस्मरन् ॥ ४३ ॥

तन्नाले विन्यसेत्पश्चाद्यजमानान्वितो गुरुः ।
भूसुरैः सह संयुक्तो ध्रुवाद्यैरिति मन्त्रतः ॥ ४४ ॥

लिङ्गं पीठे प्रतिष्ठाप्य यन्त्रस्योपरि देशिकः ।
ततः पुष्पाञ्जलिं दत्वा आचार्यादिद्विजैः सह ॥ ४५ ॥

प्रार्थयेद्बहुधा भक्त्या स्वर्णपुष्पैर्विशेषतः ।
यजमानकरं धृत्वा इमं मन्त्रमुदीरयेत् ॥ ४६ ॥

यावच्चन्द्रश्च सूर्यश्च यावल्लिङ्गं प्रतिष्ठति[2] ।
तावत्त्वं प्रीतिभावेन लिङ्गेऽस्मिन् सन्निधो भव[3] ॥ ४७ ॥

नमस्तुभ्यं सुरश्रेष्ठ यावत्तिष्ठति भूतले[4] ।
तावत्त्वं प्रीतिभावेन लिङ्गेस्मिन् सन्निधो भव[5] ॥ ४८ ॥

विश्वेश्वर नमस्तुभ्यं वंशवृद्धिकरोत्तम !
शिलामयनवागारे सदा सन्निहितो भव ॥ ४९ ॥

यावद्देवाश्च तिष्ठन्ति ऋषयो वसवस्तथा ।
तावत्त्वं शिवलिङ्गेऽस्मिन् तिष्ठ तिष्ठ सदाशिव ॥ ५० ॥

---

1. प्रवेश्याथ-
2. प्रतिष्ठते-
3. संनिहितो भव-
4. भूतलम्-
5. संनिहितो भव-

इति सम्प्रार्थ्य तत्कर्ता आचार्यो भूसुरैस्सह ।
लिङ्गमूर्ध्नि विनिक्षिप्य पुष्पाञ्जल्यादिकं सुत ! ।। ५१ ।।

यजमानो बहिः प्राप्य प्रणमेद् भूसुरैः सह ।
सुदृढं बन्धयेद्भक्त्या लिङ्गमूले च नालके ।। ५२ ।।

व्यालाकारं तदूर्ध्वं स्याद्व्यङ्गुलं त्र्यङ्गुलं तु वा ।
पूजयेद्विधिवत्पश्चात्प्राणायामादिकैर्गुरुः ।। ५३ ।।

उपचारैः समभ्यर्च्य सुवस्त्रेण च मन्त्रतः ।
लिङ्गपीठं च सञ्छाद्य दर्भदाम्ना च वेष्टयेत् ।। ५४ ।।

द्वारमाच्छादयेत्पश्चादस्त्रमन्त्रैर्गुरूत्तमः ।
वृषयागं ततो हुत्वा ध्वजं संस्थाप्य बुद्धिमान् ।। ५५ ।।

पूर्वोक्तेन विधानेन पटमारोपयेत्ततः ।
सम्पूज्य ध्वजदेवांश्च समाप्य विधिना बली [1] ।। ५६ ।।

ततश्शिखरमारोप्य तत्कुम्भं स्थापयेद्गुरुः ।
विधिवत्पूजयेद्भक्त्या तन्मन्त्रैश्च गुरूत्तमः ।। ५७ ।।

वस्त्रेणाच्छादयेत्कुम्भं तन्मूलेनैव होमयेत् [2] ।
महापीठं तु संस्थाप्य क्षेत्रपालादिकान् सुत ।। ५८ ।।

बलिपीठांश्च चण्डेशं द्वारपालौ गुरूत्तमः ।
लिङ्गाग्रे वृषभं पश्चात्स्थापयेच्च पुरोक्तवत् ।। ५९ ।।

परितः परिवारांश्च विघ्नेशादि यथाक्रमम् ।
स्थापयेच्च ततो मन्त्री यागगेहं प्रवेशयेत् ।। ६० ।।

---

1. बलीन्-
2. जुहुयात्-

पुण्याहं वाचयेत्पश्चादृत्विग्भिः सह देशिकः ।
सूर्यकान्तोद्भवं श्रेष्ठमरणेर्मध्यमं भवेत् ।। ६१ ।।

श्रोत्रियागारजं वापि पावकं च समानयेत् ।
शिवाग्निं जनयेत्पश्चाद्विधिवद्देशिकोत्तमः ।। ६२ ।।

तदग्निं सर्वकुण्डेषु नियमाग्निमुखं चरेत् ।
मूलेनादौ हुनन्मन्त्री[1] शान्तिहोमं ततः परम् ।। ६३ ।।

प्रायश्चित्तं च जुहुयात्पञ्चब्रह्माख्यकं हुनेत्[2] ।
गणहोमं चान्नहोमं चास्त्रमन्त्रेण होमयेत्[3] ।। ६४ ।।

कुण्डाधिवासहोमं च प्रत्येकं जुहुयात्सुधीः ।
सहस्रं वा तदर्धं वा शतमष्टोत्तरं तु वा ।। ६५ ।।

समिदाज्यचरून् लाजान् सिद्धार्थं च यवांस्तिलान् ।
व्रीहीसक्तु पुनश्चाज्यं तत्तन्मन्त्रेण होमयेत्[4] ।। ६६ ।।

तत्तत्कुम्भांश्च संस्थाप्य वेदिकोपरि देशिकः ।
पूजयेद्विधिवन्मन्त्री उपचारैस्समर्चयेत् ।। ६७ ।।

वेदपारायणं दिक्षु विदिक्षु च मनुं जपेत् ।
पाञ्चाभि[5]र्गुरुमन्त्राद्यैः नानासूक्तादिकैस्सह ।। ६८ ।।

---

1. जुहुयान्मन्त्री-
2. जुहुयात्-
3. जुहुयात्-
4. जुहुयात्-
5. पञ्चभि-

गृहमन्त्रैर्ब्रह्ममन्त्रैर्दिशानाथाणुभिः सह ।
मूलमन्त्रं मृत्युजितं राक्षोघ्नं वास्तुसंज्ञकम् ।। ६९ ।।

गणेशं क्षेत्रपालं च दुर्गामन्त्रं जपेत्ततः ।
प्रासादं च जपेद्भक्त्या जपेत्सप्तशतीं सुत! ।। ७० ।।

नानासूक्तादिभिर्मन्त्रैः प्रागादि परितः क्रमात् ।
जपेयुर्ब्रा[1]ह्मणैर्भक्त्या सहस्रं च जपेत्पृथक् । ७१ ।।

होमान्ते बलिदानं स्याद्ब्राह्मणान् भोजयेद्बहून् ।
तद्रात्रौ देशिकाद्यैश्च सन्ध्याकर्म समाप्य च ।। ७२ ।।

देवं सम्पूजयेत्पश्चान्मूलमन्त्रेण होमयेत् ।
ध्वजं यागेश्वरं यष्ट्वा[2] बहुदीपान् प्रबोधयेत् ।। ७३ ।।

शङ्खदुन्दुभिनिर्घोषैः सर्ववाद्यरवैस्सह ।
नर्तकैर्गायकाद्यैश्च विनिद्रामाचरेज्जनैः ।। ७४ ।।

ततः प्रातस्समुत्थाय नित्यकर्म समाप्य च ।
पुण्याहं वाचयित्वाऽथ पारायणजपैस्सह ।। ७५ ।।

पूर्वोक्तेन विधानेन होमकर्म समाचरेत् ।
मूलमन्त्रेण होतव्यं दिशाहोमं ततः परम् ।। ७६ ।।

प्रासादं गृहहोमश्च[3] ततः स्विष्टकृतं हुनेत्[4] ।
पूर्णाहुतिं ततो मन्त्री सम्पातं चार्चयेत्सुत! ।। ७७ ।।

---

1. जपेच्च ब्रा–
2. इष्ट्वा–
3. गृहहोमं च–
4. जुहुयात्–

ततः कुम्भांश्च संस्थाप्य पूजयेच्च यथोक्तवत् ।
पुण्याहं वाचयेदादौ निरीक्षाकर्म कारयेत् ॥ ७८ ॥

स्वस्तिकाद्यैर्लिखे[1]त्पश्चाद्द्रव्यजालं न्यसेत्ततः ।
व्रीहींश्च तण्डुलांश्चैव गोधूमांश्चणकांस्तथा ॥ ७९ ॥

मुद्गं माषं कुलित्थं च शिम्बकं सर्षपं तिलम् ।
आढकं कङ्गुनीवारे नालिकेरफलादिकम् ॥ ८० ॥

घृतं तैलं च शुद्धान्नं नानाभक्ष्यसमन्वितम् ।
कूष्माण्ड[2]राकरैर्युक्तं दीपवर्ति समन्वितम् ॥ ८१ ॥

हरिद्राचूर्णसंयुक्तं दधिक्षीरादिसंयुतम् ।
ध्वजमूले च गां बध्वा सवत्सां मण्डनैर्युताम् ॥ ८२ ॥

गर्भगेहं प्रविश्याथ प्राणायामादिकैर्गुरुः ।
पञ्चोपचारैरभ्यर्च्य नेत्रोन्मीलनमाचरेत् ॥ ८३ ॥

तत्तन्मन्त्रेण गायत्र्या तत्तद्द्रव्यैस्सुतोत्तम ! ।
गन्धपुष्पैस्समभ्यर्च्य धूपदीपादि कारयेत् ॥ ८४ ॥

मुखवस्त्रं त्यजेत्पश्चान्नीराजनमथाचरेत् ।
बोधयित्वा बहून् दीपान् वीणावेणुरवैस्सह ॥ ८५ ॥

भेरीमृदङ्गशङ्खाद्यैः सर्ववाद्यरवैस्सह ।
पुष्पाञ्जलिं ततो दत्त्वा भूसुरैस्सह देशिकः ॥ ८६ ॥

---

1. स्वस्तिकादीन् लिखे-
2. कूष्माण्डै-

लिङ्गस्य सन्निधानार्थं कलशान् स्नपयेद्बहून्[1] ।
विधिवत्पूजयेन्मन्त्री वेदिकोपरि मध्यतः ॥ ८७ ॥

सहस्रं वा तदर्धं वा सहस्रमथवा[2] तथा ।
स्थापयेच्च ततो मन्त्री पूर्वोक्तेन सुतोत्तम ॥ ८८ ॥

पूर्वोक्तेन विधानेन ऋत्विग्भिस्सह देशिकः ।
मूलमन्त्रेण हुत्वाऽथ कुण्ड[3]होमादिकं चरेत् ॥ ८९ ॥

पूर्णाहुतिं ततो हुत्वा सम्पातं कलयेत्पुनः ।
देवालयं प्रविश्याथ आचार्यो ऋत्विजैस्सह[4] ॥ ९० ॥

प्राणायामादिकं कृत्वा न्यासजालं विधाय च ।
सृष्टिमार्गेण कुर्वीत तत्त्वकुम्भं समुद्धरेत् ॥ ९१ ॥

स्नापयेच्च ततो लिङ्गं कलामावाहयेत्ततः ।
प्राणप्रतिष्ठां कुर्वीत देवं संयोज्य देशिकः ॥ ९२ ॥

पञ्चोपचारैरभ्यर्च्य तत्तन्मुद्राः प्रदर्शयेत् ।
स्नापयेत्कलशान्मन्त्रैः श्रीरुद्रपवमानकैः ॥ ९३ ॥

नानासूक्तादिकैर्मन्त्रैः प्रधानादि यथाक्रमम् ।
लिङ्ग[5] संस्नापयेद्भक्त्या कलशैश्च पृथक् पृथक् ॥ ९४ ॥

उद्धृत्य लेपयेल्लिङ्गमष्टगन्धं सुतोत्तम ।
महापूजां ततः कुर्यात्सहस्रैर्नामभिस्सुत ॥ ९५ ॥

---

1. स्नापयेद्बहून्–
2. तदर्धमथवा–
3. कुण्डे–
4. ऋत्विग्भिः सह–
5. लिङ्गं–

नानापुष्पैश्च सम्पूज्य तदन्ते स्वर्णपङ्कजम् ।
समर्प्य धूपदीपाद्यैः षड्रसान्नैश्च भूषणैः ॥ ९६ ॥

फलं पक्वं निवेद्याऽथ ताम्बूलं च निवेदयेत् ।
गण्डूषं च ततो दत्त्वा नीराजनमथाचरेत् ॥ ९७ ॥

पुष्पाञ्जलीं[1] ततो दत्त्वा नमस्कुर्यात्प्रदक्षिणैः ।
स्तोत्रपाठं वदेद्भक्त्या प्रसन्नार्घ्यं प्रदापयेत् ॥ ९८ ॥

बलिदानं ततः कुर्यात्पञ्चवाद्यरवैस्सह ।
देवालयं प्रविश्याऽथ पूजयेदुपचारकैः ॥ ९९ ॥

ब्राह्मणान् भोजयेत्पश्चाद्भक्ष्यभोज्यादिकैस्युत ।
इत्येवं कारयेद्भक्त्या प्रतिष्ठां देशिकोत्तमः ॥ १०० ॥

स्नाप्य[2] सम्पूज्य देवेशं मूलमन्त्रेण होमयेत् ।
बहुदीपान् बोधयित्वा वीणावेणुरवैस्सह ॥ १०१ ॥

उपचारैस्समभ्यर्च्य देवाग्रे स्थण्डिले गुरुः ।
भेरीं सन्ताड्य विधिवत्पटहं पूजयेत्ततः ॥ १०२ ॥

भूताह्वानं ततः पश्चाद्बलिं चैव तु दापयेत् ।
बलयन्ते चोत्सवं कुर्याद्ग्रहान्तं[3] वै विचक्षणः ॥ १०३ ॥

पुनर्देवालयं प्राप्य प्रार्थयित्वा समर्पयेत् ।
पुनरुत्थाय तत्प्रातः चतुर्थे दिवसे हरिः[4] ॥ १०४ ॥

---

1. पुष्पाञ्जलिं–
2. संस्नाप्य–
3. दृगृहान्तं–
4. गुरुः–

पुण्याहवाचनं कृत्वा देवं सम्पूज्य भक्तितः ।
यागगेहं प्रविश्याथ ऋत्विग्भिस्सह देशिकः ॥ १०५ ॥

मूलेन होमयेद्वत्स [1] अघोरं चैव त्र्यम्बकम् ।
पञ्चब्रह्ममनुं हुत्वा अधिवासं च होमयेत् [2] ॥ १०६ ॥

तथाऽङ्गहोमं हुत्वाथ शिबिकादीनि कारयेत् ।
पूर्णाहुतिं ततो हुत्वा बलिदानं समाचरेत् ॥ १०७ ॥

दण्डाकारं च विधिवद्ग्रामान्ते बलिमाहरेत् ।
रथं सम्पूज्य विधिवद्दिग्विदिक्षु बलिं हरेत् ॥ १०८ ॥

महोत्सवं ततः कुर्यादथयानादिकैस्सुत ।
आरोपयेच्चर्य [3] देवेशं ग्रामान्ते नगरं [4] सुत! ॥ १०९ ॥

अवरोप्य ततः पश्चात्प्रविशेद्दालयं [5] प्रति ।
उपचारैस्समभ्यर्च्य क्षमस्वेति ततो वदेत् ॥ ११० ॥

द्विजानां भोजयेत्पश्चात्तन्निशि स्नाप्य [6] देशिकः ।
देवं सम्पूजयेद्भक्त्या विधिवद्देशिकोत्तमः ॥ १११ ॥

प्रधानकुण्डे जुहुयात्ततो बल्युत्सवं गुरुः ।
पूर्वोक्तद्रव्यमन्त्रैश्च महाभूतबलिं हरेत् ॥ ११२ ॥

---

1. जुहुयाद्वत्स!
2. होमयेत्–
3. आरोपयेच्च–
4. नगरे–
5. प्रविशेदालयं–
6. संस्नाप्य–

ग्रामवीथ्यादि विकिरेत्पञ्चवाद्यरवैस्सह ।
तदन्ते प्रविशेद्गेहमर्चयेच्च सुतोत्तम ॥ ११३ ॥

पुनः प्रातः समुत्थाय पञ्चमे दिवसे सुत ।
गणेशं पूजयेद्भक्त्या पुण्याहं वाचयेद्गुरुः ॥ ११४ ॥

पूर्णाहुती [1] ततो हुत्वा ऋत्विग्भिस्सह देशिकः ।
स्नापयेद्देवदेवेशं स्थाप्य [2] कुम्भोदकैः शुभैः ॥ ११५ ॥

पूजाबल्युत्सवं नीत्वा ब्राह्मणान् भोजयेत्ततः ।
चूर्णोत्सवं ततः कुर्यान्नानाभक्तजनैस्सह ॥ ११६ ॥

आचार्यो ऋत्विजैस्सार्धं [3] यजमानस्सहैव तु ।
तीर्थस्नानं ततः कृत्वा कौतुकं तु विसर्जयेत् ॥ ११७ ॥

पुनर्गेहं प्रविश्याथ संवादं [4] विधिवत्सुत !
महापूर्णाहुतिं हुत्वा कुण्डाग्निं च विसर्जयेत् ॥ ११८ ॥

अवरोप्य पटं पश्चाद्दशदानं प्रदापयेत् ।
फलं पुष्पं च ताम्बूलं कन्यादानादिकं सुत ॥ ११९ ॥

दीनान्धबधिरादिभ्यो दापयेद्भूरिदक्षिणाम् ।
आचार्यं पूजयेद्भक्त्या वस्त्रहेमाङ्गुलीयकैः ॥ १२० ॥

भूदानं भूषणादीनां गुरुं सन्तोष्य दापयेत् ।
जपपारायणादीनां दक्षिणां च यथोक्तवत् ॥ १२१ ॥

---

1. पूर्णाहुतिं–
2. संस्थाप्य–
3. ऋत्विग्भिस्सार्धं–
4. सम्पातं–

दापयेच्च ततो वत्स द्विजेभ्यश्च यथाक्रमम् ।
इत्येवं कारयेद्भक्त्या नवरात्रं सुतोत्तम ॥ १२२ ॥

सप्ताहं पञ्चरात्रं वा त्रिरात्रं चैकमेव च ।
प्रतिष्ठाकर्म कर्तव्यं कर्तुर्विभवविस्तरात् ॥ १२३ ॥

कर्तुर्विभवलोपेऽपि विस्तरं नैव लोपयेत् ।
प्रतिष्ठा शिवलिङ्गस्य मयेत्युक्तं[1] सुतोत्तम ॥ १२४ ॥

ब्रह्महत्यादिपापानां[2] तत्क्षणादेव नाशयेत् ।
वंशवृद्धिकरं सौख्यं जयवृद्धिकरं मुदा ॥ १२५ ॥

सर्वभोगांश्च लभते एहिके च[3] न संशयः ।
देहान्ते शिवसायुज्यं सत्यं सत्यं सुतोत्तम ॥ १२६ ॥

इति बृहद्वातुले शिवस्कन्दसंवादे शिव (बाण)
लिङ्गप्रतिष्ठाविधिर्नाम विंशतिः पटलः ॥

---

1. मयेत्युक्ता–
2. पापानि–
3. ऐहिकांश्च–

—o—

## बृहद्वातुले

## एकरात्रविधानम्

—o—

विम्बपीठग्रहालिन्द[1]प्राङ्कणेषु[2] यथाक्रमम् ।
खननं हननं दाहं[3] पूरणाङ्गानि वासनम्[4] ॥ १ ॥

विप्रोच्छिष्टं च गव्यं च सप्तैताः स्थानशुद्धयः ।

स्कन्दः— अथैकाहोत्सवम्[5]—

त्रिलोचन नमस्तुभ्यं नमस्ते वृषभद्ध्वज ॥ २ ॥

बन्धादिकर्मणां[6] कर्तुं दिवसानां[7] मितं कथम् ।
कर्मक्रमः कथं देव कथं तन्मण्डपादिकम् ॥ ३ ॥

हेमकुम्भार्चनादीनि सर्वकर्माणि शङ्कर !
विस्तराद्ब्रूहि भगवन् श्रोतुमिच्छाम्यहं गुरो ! ॥ ४ ॥

शिवः—

शृणु स्कन्द प्रवक्ष्यामि दिवसानां[8] मितं सुत ।
कर्म मण्डपकुण्डादि होमं कुम्भार्चनादिकम् ॥ ५ ॥

---

1. गृहालिन्द–
2. प्राङ्गणेषु–
3. दाहः–
4. पूरणं गन्धवासनम्–
5. होत्सवः–
6. कर्माणि–
7. दिवसानां–
8. दिवसानां–

वेदघोषाणि सर्वाणि [1] चैकरात्रादिभेदतः ।
एकत्रिः पञ्चरात्रं च ऋष्याख्यं नवरात्रकम् ॥ ६ ॥

दिवसानां मितं ह्येवं सर्वसम्पत्प्रदं नृणाम् ।
शुभप्रदं चैकरात्रं त्रिरात्रं धर्मदं सुत ॥ ७ ॥

धनप्रदं पञ्चरात्रं ऋष्याख्यं श्रीपदं सदा ।
बहुभाग्यप्रदं ज्ञेयं नवरात्रं नृणां सुत ॥ ८ ॥

शिवलिङ्गप्रतिष्ठार्थं सर्वरात्रं प्रशस्यते ।
दुर्गायां नवरात्रं स्यात्सप्तरात्रं तु वैष्णवे ॥ ९ ॥

हरीशयोः पञ्चरात्रं त्रिरात्रं गणपे स्मृतम् ।
एकरात्रमथान्यासं [2] देवतानां प्रशस्तकम् ॥ १० ॥

सवेदिकां [3] च तन्मध्ये षोडशस्तम्भसंयुतम् ।
वेदिकापश्चिमे भागे कुण्डं च चतुरश्रकम् ॥ ११ ॥

त्रिमेखलासमायुक्तं खातं चारत्निमात्रकम् ।
कुण्डस्य पश्चिमे योनिं सनाभी [4] बोधिपत्रवत् ॥ १२ ॥

मयोक्तलक्षणैः कुर्याच्चतुर्द्विरादिभूषणैः [5] ।
प्रातःकाले समुत्थाय नित्यं निर्वृत्य देशिकः ॥ १३ ॥

---

1. वेदघोषाश्च सर्वे च–
2. मथान्यासां–
3. सवेदिकं–
4. सनाभिं–
5. चतुर्द्वारादिभूषणैः–

गणेशं पूजयेदादौ फलपक्षसुवर्णकैः[1] ।
नान्दीमुखं च पुण्याहं वाचयेत्तदनन्तरम् ॥ १४ ॥

द्विजोत्तमांश्च वरयेन्मधुपर्कक्रियां ततः ।
सद्योऽङ्कुरार्पणं कुर्यात्पूजयेन्नैत्तिकध्वजम्[2] ॥ १५ ॥

तत्र होमं प्रकर्तव्यो[3] ध्वजमूलेन तान्त्रिकः ।
नित्यार्चनादिकं कृत्वा ब्राह्मणान् भोजयेत्ततः ॥ १६ ॥

पुण्याहवाचनं कृत्वा मण्टपार्थं च तन्निशि ।
संस्कृतिं च ततः कुर्याद्विद्येशादिघटान् न्यसेत् ॥ १७ ॥

विद्येशान् वर्धनीं कुम्भं शिवकुम्भं च तोरणम् ।
द्वारकुम्भान् पताकाख्यं ग्रहाख्यं ब्रह्मसंज्ञकम् ॥ १८ ॥

तत्त्वाख्यं च कलाख्यं च तण्डुलाढ्यं जलाढ्यकम् ।
स्थानशुद्धाख्यबिम्बाख्यं सङ्कोचाख्यघटं यजेत् ॥ १९ ॥

दशकुम्भांश्च सम्पूज्य राक्षोघ्नं होमयेत्ततः[4] ।
वास्तुहोमं च विधिवद्बलिं वास्तौ[5] समाचरेत् ॥ २० ॥

रक्षाबन्धः प्रकर्तव्यो वेदमङ्गलनिःस्वनैः ।
सङ्कोचाख्यघटे देवं समावाह्य यदुत्तमः[6] ॥ २१ ॥

---

1. फलाक्षतसुवर्णकैः/फलपत्रसुवर्णकैः–
2. नैत्यिकध्वजम्–
3. प्रकर्तव्यम्–
4. जुहुयात्ततः–
5. वास्तोः–
6. गुरूत्तमः–

तन्मन्त्रैराहुतीर्हुत्वा संहारोक्तेन मार्गतः ।
संशोध्य देवतानालं शक्तिमन्त्रेण बुद्धिमान् ॥ २२ ॥

वस्त्रेणाच्छाद्य तद्द्वारं कुर्याज्जागरणं ततः ।
ततः प्रातः समुत्थाय पुण्याहं वाचयेद्गुरुः ॥ २३ ॥

वेदघोषो देवदिक्षु चतुरश्रं विदिक्षु च ।
गुरुं[1] गणपतिं दुर्गां क्षेत्रपालं सरस्वतीम् ॥ २४ ॥

श्रीसूक्तं यागमन्त्रं च मूलमन्त्रं जपेत्ततः ।
तद्बन्धं पूजयेत्पश्चान्नान्दीपुण्याहपूर्वकम् ॥ २५ ॥

बन्धयेद्देवतानालं पूजयित्वाऽथ देवताम् ।
वस्त्रेणाच्छाद्य तं देवं सशक्तिं शक्तिमन्त्रतः ॥ २६ ॥

वह्निं चानीय विधिवत्कुण्डयोनौ च विन्यसेत् ।
तदग्निं जनयेत्तत्र होमयेच्छ[2]क्तितत्त्वकम् ॥ २७ ॥

कलाशुद्धिं स्थानशुद्धिं बिम्बशुद्धिमतः परम् ।
दिग्मन्त्रैराहुतीर्हुत्वा पञ्चब्रह्माणुभिः सह ॥ २८ ॥

पूर्णमन्त्राहुतिं पश्चात्प्रायश्चित्तं तु शान्तिकम् ।
निरीक्षाकर्म कर्तव्यं मुखवस्त्रं न्यसेत्तदा ॥ २९ ॥

विधिवत्स्नापयेद्देवमष्टोत्तरशतैर्घटैः ।
पूजाबल्युत्सवं नीत्वा दानकर्म समाचरेत् ॥ ३० ॥

---

1. गुरुः–
2. जुहुयाच्छ-

पूर्णयागं[1] प्रकर्तव्यं[2] हुत्वा पूर्णाहुतिं ततः ।
कृच्छ्रं दत्त्वा तदा मन्त्री देवं मूलेन योजयेत् ॥ ३१ ॥

यागेशार्घ्यघटैर्देवं स्नाप्य[3] कर्म समर्पयेत् ।
द्विजानभ्यर्च्य सम्भोज्य दक्षिणां दापयेत्ततः ॥ ३२ ॥

देशिकं तोषयेदन्ते तन्त्रोक्तकरणैस्सह ।
एकरात्रविधिर्देवं[4] त्रिरात्रमथ कथ्यते ॥ ३३ ॥

बृहद्वातुले काम्यकाण्डे काम[5]शिवस्कन्दसंवादे एकरात्रविधानं नाम एकोनविंशतितमः पटलः ॥

---

1. पूर्णयागः–
2. प्रकर्तव्यः–
3. संस्नाप्य–
4. विधिर्ह्येवं–
5. कामेत्यधिकमिव भाति–

—o—

## त्रिरात्रकर्मविधानम्

—o-

अथाऽपरं प्रवक्ष्यामि त्रिरात्रस्य विधिं सुत ।
गेहस्य पुरतः कुर्यात्सप्तहस्तकं मण्टपम्[1] ॥ १ ॥

तन्मध्ये वेदिका कार्या विधिवत्कुण्डकर्म च ।
वृत्तद्वयं च कर्तव्यं वेदिकादक्षिणोत्तरे ॥ २ ॥

चतुरश्रं प्रधानाख्यं कुण्डं च पुरतो भवेत् ।
सयोनिं नाभिसंयुक्तं द्वारतोरणभूषितम् ॥ ३ ॥

प्रागुक्तवत्क्षणे कुर्यात्सकुण्डं मण्टपं गुरुः ।
तथैवोषसि चोत्थाय नित्यकर्म समाप्य च ॥ ४ ॥

मूर्तिपो मन्त्रिको ब्रह्मा यजमानः सदस्यकः ।
सर्वाङ्गं वापयेत्पश्चाद्विधिवत्स्नानमाचरेत् ॥ ५ ॥

पुनः सङ्कल्प्य देवाग्रे भूसुरादिजनैस्सह ।
विघ्नेशं पूजयेदादौ फलैर्होमैश्च मोदकैः ॥ ६ ॥

नान्दीक्रियां च पुण्याहं संवाच्य वरयेद्द्विजान् ।
कृच्छ्रं दत्वा सुविप्राय मधुपर्कं प्रदापयेत् ॥ ७ ॥

ध्वजार्थं मृदमानीय यागवेद्यां न्यसेद्बुधः ।
ध्वजहोमं प्रकुर्वीत ध्वजकुम्भान् यजेत्तदा ॥ ८ ॥

---

1. सप्तहस्तकमण्डपम्—

तत्पटं पूजयेत्तत्र भ्रमये[1] द्देवमन्दिरम् ।
नैत्तिक[2]ध्वजदण्डस्य पटमारोप्य भक्तितः ॥ ९ ॥

वस्त्रेण वेष्ट्य[3] तन्मूलं विधिवत्पूजयेध्द्वजम् ।
दिक्पटं बन्धयेत्पश्चान्मण्टपेन सहैव तु ॥ १० ॥

नित्यपूजाबलिं हित्वा[4] भोजयेद्भूसुरान् बहून् ।
स्नानसन्ध्यक्रियां[5] रात्रौ कृत्वाऽथ विकटं यजेत् ॥ ११ ॥

नान्दिक्रियां[6] च पुण्याहं यागमण्टपसंस्कृतिम् ।
बीजानि वापयेद्धीमान् बीजमूलेन सुव्रत ॥ १२ ॥

राक्षोघ्नं वास्तुहोमं च बलिं वास्तो[7] समाचरेत् ।
तण्डुलाढ्यं जलाढ्यं च स्थापयेच्च घटद्वयम् ॥ १३ ॥

द्वारतोरणविघ्नेशान् यष्ट्वा[8] च शिववर्धनीम् ।
पताकाख्यान् ग्रहाख्यांश्च दिक्पालाख्यान् समर्चयेत् ॥ १४ ॥

पञ्चब्रह्मघटान् यष्ट्वा[9] कलाख्यं तत्त्वसंज्ञकम् ।
स्थाने बिम्बादिशुद्ध्यर्थं सम्पूर्य च घटद्वयम् ॥ १५ ॥

---

1. भ्रामये–
2. नैत्यिक–
3. वस्त्रेणावेष्ट्य–
4. कृत्वा–
5. संध्याक्रियां–
6. नान्दीक्रियां–
7. वास्तोः–
8. इष्ट्वा–
9. इष्ट्वा–

सङ्कोचाख्यमथास्त्राख्यं तत्तन्मन्त्रैर्यजेत्तदा ।
दर्भदाम्नाच रक्षार्थं बन्धयेन्मूलमन्त्रतः ॥ १६ ॥

सङ्कोचं कर्म कर्तव्यं नालशुद्धिमतःपरम् ।
ततो जागरणं कुर्याद्गीतनृत्तादि नर्तकैः ॥ १७ ॥

तत्प्रभाते समुत्थाय नित्यं नीत्वा गुरूत्तमः ।
घटिकामन्त्रमुद्धार्य पुण्याहं वाचयेत्ततः ॥ १८ ॥

स्थानबिम्बादिशुद्धिं च तत्तन्मन्त्रेण कारयेत् ।
दिक्षु अध्ययनं[1] कुर्याज्जपेयुर्ब्राह्मणोत्तमः[2] ॥ १९ ॥

पञ्चमन्त्रांश्च गुर्वादि[3] चतुरश्रं जपेत्ततः ।
दिग्ग्रहं ब्रह्ममन्त्रं च यागमूलं च सूक्तकम् ॥ २० ॥

सुलग्ने चैव सम्प्राप्ते यजेद्रुद्रं तदा पुनः ।
भ्रामयेदालयं पश्चाद्विन्यसेद्देवसन्निधौ ॥ २१ ॥

नान्दीक्रिया च सम्पूज्य तन्नालं बन्धयेत्ततः[4] ।
सम्भूष्य शक्तिपुरुषौ वस्त्राभ्यां मूलमन्त्रतः ॥ २२ ॥

विधिवज्जनयेदग्निं होमयेच्छक्ति[5]तत्त्वकम् ।
दिशाहोमं कलावृद्धिं पञ्चब्रह्ममनुं तथा ॥ २३ ॥

नित्यार्चनादिकं नीत्वा ब्राह्मणान् भोजयेत्तदा ।
तद्रात्रौ पूजयेद्देवं वहुदीपांश्च बोधयेत् ॥ २४ ॥

---

1. चाध्ययनं–
2. त्तमाः–
3. गुर्वादिः–
4. बध्नीयात्ततः–
5. जुहुयाच्छक्ति

पुनर्जागरणं नीत्वा वेदमङ्गलनिःस्वनैः ।
प्रातरुत्थाय शुद्धात्मा पुण्याहं वाचयेत्ततः ॥ २५ ॥

नान्यजातं च कर्तव्यं वेदपारायणादिकम् ।
मुखवस्त्रं परित्यज्य निरीक्षणमतः परम् ॥ २६ ॥

देवं सम्पूज्य बहुधा परिवारार्चनं ततः ।
बल्युत्सवं तदा कृत्वा होमकर्म समाचरेत् ॥ २७ ॥

मूलमन्त्रेण होतव्यं ग्रहमन्त्राहुतिं पुनः ।
स्नपनाख्यं हुनेत्पश्चा[1]त्तन्मन्त्रेण विचक्षणः ॥ २८ ॥

परिवारमनुं हुत्वा ततः पूर्णाहुतिं गुरुः ।
विधिवद्द्विशतैः कुम्भैरष्टयुग्मादिकैस्सह ॥ २९ ॥

स्नाप्य सम्पूज्य देवेशं बलिदानाद्यथोत्सवम् ।
ब्राह्मणान् भोजयेत्पश्चाद्रात्रौ दीपोत्सवादिकम् ॥ ३० ॥

भेरीशङ्खमृदङ्गाद्यैः पुनर्भूतबलिं हरेत् ।
पुनर्नान्दीं च पुण्याहं शान्तिं हुत्वा ततः परम् ॥ ३१ ॥

पूर्णहोमं च कर्तव्यं निशामन्त्रेण बुद्धिमान् ।
तथैव पूर्णयागस्य यात्राहोमं हुनेद्गुरुः[2] ॥ ३२ ॥

नदी[3] सम्प्राप्य सुस्नात्वा[4] प्रविशेद्देवमन्दिरम् ।
कुण्डे पूर्णा[5] हुत्वा तत्पटं चावरोप्य च ॥ ३३ ॥

---

1. स्नापनाख्यं जुहुयात्पश्चा–
2. जुहुयाद्गुरुः–
3. नदीं–
4. सुस्नाय–
5. पूर्णाहुतिं–

तद्दण्डं खड्गमन्त्रेण छेदयेत्तदनन्तरम् ।
दानादि दशधा दद्याद्गोभूम्यादिप्रभेदतः ॥ ३४ ॥

कृच्छ्रदानं तदन्ते स्याद्यष्ट्वाऽथ [1] ब्राह्मणांस्ततः ।
दक्षिणां दापयेदन्ते यथाविभवविस्तरम् ॥ ३५ ॥

तन्त्रोपकारणैः [2] स्वर्णै[3]राचार्यं तोषयेत्पुनः ।
बहुधा दक्षिणां दत्वा गां महीं चारकांस्तथा ॥ ३६ ॥

मूलेन योज्य [4] देवेशं वेदवाद्यादिनिःस्वनैः ।
पादाभिषेचनं कृत्वा मण्टपस्य घटोदकैः ॥ ३७ ॥

सर्वकर्म समाप्याऽथ शान्त्यर्थं स्नापयेद्घटैः ।
नित्योत्सवमतः कुर्याद्भोजयेद्ब्राह्मणोत्तमान् ॥ ३८ ॥

त्रिरात्रकर्म चेत्युक्तं पञ्चरात्रमतः शृणु ॥ ३९ ॥

इति बृहद्वातुले कारयखण्डे [5] शिवस्कन्दसंवादे त्रिरात्रकर्मविधानं नाम विंशतिः [6] पटलः ॥

---

1. स्यादिष्ट्वाथ–
2. तन्त्रोपकरणैः–
3. स्वर्णं–
4. संयोज्य–
5. काम्यकाण्डे–
6. विंशतितमः–

—o—

## बृहद्धातुले

## पञ्चरात्रविधिः

—o—

पञ्चरात्रक्रियाजालं प्रवक्ष्यामि यथाक्रमम् ।
आदौ देवाग्रतः कुर्यान्नवहस्तप्रमाणतः ॥ १ ॥

मण्टपं वेदिकामध्ये पञ्चकुण्डानि [1] संयुतम् ।
चतुरश्रं चतुर्दिक्षु सयोनि [2] नाभिसंयुतम् ॥ २ ॥

वरुणानिलयोर्मध्ये प्रधानं वृत्तमीरितम् ।
द्वाराणि तोरणादीनि विधिवत्कारयेद्गुरुः ॥ ३ ॥

ततो विप्रान् समाहूय कर्मज्ञान् वेदपारगान् ।
स्वशाखोक्तयुतान् विप्रान् दरिद्रा [3] नैष्ठिकान् द्विजान् ॥ ४ ॥

कर्मार्थं प्रार्थ्य तद्भक्त्या प्रातरुत्थाय सुव्रत ।
सदस्यो यजमानश्च चत्वारो होतृका गुरुः ॥ ५ ॥

ब्रह्मा श्चाष्ट[4]जनाश्चैते क्षौरकर्म समाचरेत् [5] ।
नदीं प्राप्याऽथ सुस्नात्वा [6] मृत्तिकास्नानमुक्तवत् ॥ ६ ॥

कृत्वा देवालयं गत्वा द्विजवर्यैर्मनूत्तमः [7] ।
विघ्नेशं पूजयेदादौ स्वर्णैः पक्वफलादिकैः ॥ ७ ॥

---

1. पञ्चकुण्डैश्च –
2. सयोनिं –
3. दरिद्रान् –
4. ब्रह्माचाष्ट –
5. समाचरेयुः –
6. सुस्नाय –
7. गुरूत्तमः/मन्त्रोत्तमः –

ततः सङ्कल्प्य नान्द्यादिपुण्याहं वाच्य[1] सुव्रत ।
पुनर्विप्रांश्च वरयेन्मधुपर्कादिपूर्वकम् ॥ ८ ॥

कृच्छ्रदानं विधायाऽथ सवस्त्रप्रतिमान्वितम् ।
मृत्तिकां विधिवद्धृत्वा भ्रामयेद्देवमन्दिरम् ॥ ९ ॥

यागवेद्यां ततो न्यस्त्वा[2] नित्यपूजाबलिं हरेत् ।
ब्राह्मणान् भोजयेन्मन्त्री तद्रात्रौ देशिकोत्तमः ॥ १० ॥

पुण्याहवाचनं कृत्वा गणेशस्यार्चनादिकम् ।
मण्टपस्याथ संस्कारः द्वारकुम्भान् यजेत्पुनः ॥ ११ ॥

तोरणाख्यान् पताख्यान् तण्डुलाढ्यजलाढ्यकम् ।
राक्षोघ्नं वास्तुहोमं स्याद्बलिं वास्तोस्तथैव च ॥ १२ ॥

रक्षाबन्धं प्रकृत्वाथ[3] बीजानि वपयेद्गुरुः[4] ।
सङ्कोचकर्म निर्वृत्य नालशुद्धिं तथैव च ॥ १३ ॥

गीतैर्जागरणं नीत्वा प्रातरुत्थाय देशिकः ।
पुण्याहं वाचयित्वाऽथ शुद्धिः स्यात्स्थानबिम्बयोः ॥ १४ ॥

वृषयागं ध्वजारोहं दिक्पटं बन्धयेत्क्रमात् ।
यागधामध्वजं बद्ध्वा सदण्डं दिक्पटान्वितम् ॥ १५ ॥

वेदिकायां घटान् पश्चाद्विघ्नेशान् वर्धनीशिवाम् ।
पञ्चब्रह्मघटान् पञ्चनवग्रहघटान् यजेत् ॥ १६ ॥

---

1. वाचयित्वा–
2. न्यस्य–
3. प्रकृत्याथ–
4. वापयेद्गुरुः–

कृत्वा वृद्धिघटान् पञ्च पञ्चतत्त्वघटांस्तथा ।
दिग्घटान् पञ्च सम्पूर्य प्राणशक्तिघटान् यजेत् ॥ १७ ॥

स्थानबिम्बादिशुद्ध्यर्थं पञ्च पञ्चघटान् पृथक् ।
पञ्चकुण्डघटान् यष्ट्वा[1] पञ्चगव्यघटान् यजेत् ॥ १८ ॥

जपपारायणारम्भः पृथक्सूत्रान्[2] क्रमादथ ।
गुरुमन्त्रादिकान् पञ्च चतुरस्रं ततः परम् ॥ १९ ॥

पञ्चसूक्तघटान् कृत्वा पञ्चब्रह्ममनुस्तथा[3] ।
दिशामन्त्रान् ग्रहान् मन्त्री यागमूलमनुं ततः ॥ २० ॥

पुण्याहं वाचयेत्पश्चात्सर्ववाद्यरवैस्सह ।
सम्पूज्य विधिवद्बन्धं वेदघोषादिनिःस्वनैः ॥ २१ ॥

तद्बन्धं सुदृढं बद्ध्वा नालमूले च देशिकः ।
लिङ्गं पीठं च वस्त्राभ्यां संवेष्ट्याभ्यर्च्य मूलतः ॥ २२ ॥

शिवाग्निं जनयेत्पश्चाद्धोमकर्म समारभेत्[4] ।
तत्त्वं शक्तिं कलावृद्धिं वेदघोषैर्जपादिकैः ॥ २३ ॥

हुत्वा देवं यजेदन्ते पुनर्विप्रांश्च भोजयेत् ।
स्थानशुद्धिं बिम्बशुद्धिं पूर्णयागं हुनेत्पुनः[5] ॥ २४ ॥

ततो देवं च तद्रात्रौ पूजयेत्कुसुमादिकैः ।
बहुधा चोपहाराद्यैः तोषयेद्देवमव्ययम् ॥ २५ ॥

---

1. इष्ट्वा–
2. पृथक्सूत्रं–
3. मनूंस्तथा–
4. समारभेत–
5. जुहुयात्पुनः–

भेरीकहलशङ्खाद्यैः बहुदीपादिबोधनैः ।
नानावृत्तादिगीताद्यैः गायकैः पाठकैरपि ॥ २६ ॥

विनिद्राकर्म कर्तव्यं प्रातःकाले ततः परम् ।
नित्यकर्म निवर्त्याथ[1] घटिकायन्त्रमर्चयेत् ॥ २७ ॥

दिशाहोमं प्रकुर्वीत मूलमन्त्र[2]नवग्रहम् ।
परिवारमनुं हुत्वा जपपारायणादिकैः ॥ २८ ॥

संहृत्य देवमाराध्य ब्राह्मणान् भोजयेत्ततः ।
स्नानक्रियादि तद्रात्रौ देवं संहारमार्गतः ॥ २९ ॥

विधिवत्पूजयेन्मन्त्री विनिद्रां कारयेज्जनैः ।
चतुर्थे दिवसे प्रातः पुण्याहं वाचयेत्सुत ॥ ३० ॥

निरीक्षणं विधायाथ वस्त्रत्यागमनन्तरम् ।
स्नपनाख्य[4]मनुं हुत्वा ब्रह्ममन्त्रान् हुनेत्तथा[5] ॥ ३१ ॥

मूलमन्त्रेण यागेशं चतुर्द्वारमनुं ततः ।
विधिवत्स्नापयेद्देवं सहस्रार्धघटोदकैः ॥ ३२ ॥

पूजाबल्युत्सवं कुर्याद्भोजयेद्ब्राह्मणांस्ततः ।
रात्रौ भेरीं समुत्ताड्य नान्दीकर्मादिपूर्वकम् ॥ ३३ ॥

भूतबल्यादिकं दत्वा पञ्चवाद्यरवैस्सह ।
विनिद्राकर्म निर्वृत्य प्रातस्तत्पञ्चमे दिने ॥ ३४ ॥

---

1. निर्वृत्याथ-
2. मूलमन्त्रैः-
3. स्नापनाख्यमनुं-
4. जुहुयात्तथा-

नित्यकर्म च कर्तव्या ततः पुण्याहवाचनम् ।
वेदघोषैर्जयाद्यैश्च प्राणमन्त्रं हुनेत्ततः ॥ ३५ ॥

प्रायश्चित्तं च शान्तिं च पूर्णहोम[1] ततः परम् ।
भोजयेद्द्विप्रमुख्यांश्च नित्यपूजाबलिं ततः ॥ ३६ ॥

पुनश्चूर्णादियागा[2] स्युः पूजाबल्युत्सवात्परम् ।
यात्राहोमं तु कृत्वा तु नद्याब्धौ[3] स्नानमाचरेत् ॥ ३७ ॥

देवं सम्पूज्य बहुधा पुनर्गेहं प्रविश्य च ।
मण्टपे देवमाराध्य कुण्डे पूर्णाहुतिं हुनेत्[4] ॥ ३८ ॥

ध्वजं विसृज्य तद्दण्डं सञ्छिनेत्[5] खड्गमन्त्रतः ।
दानकर्माणि कुर्वीत कृच्छ्रं दत्वा ततः परम् ॥ ३९ ॥

स्वस्तिवाक्यैर्वाद्यरावैः वाद्यघोषादिनर्तनैः ।
देवमन्तः प्रविश्याथ पूजयेदुपचारकैः ॥ ४० ॥

तत्परे दिवसे प्रातः मण्टपस्थैर्घटोदकैः ।
पादाभिषेचनं कुर्यात्सर्वकर्म समर्थयेत्[6] ॥ ४१ ॥

द्विजेभ्यो दक्षिणां दद्याद्यथाविचानुसारतः ।
यागोपकरणैरार्यं तोषयेद् द्रविणैस्सह ॥ ४२ ॥

पञ्चरात्रमिति ख्यातं सप्तरात्रमथो शृणु ॥ ४३ ॥

इति बृहद्धातुले सर्वागमसारे पञ्चरात्रविधिरिति
एकविंशतितमः पटलः ॥

---

1. पूर्णहोमं–
2. यागाः–
3. नद्यब्ध्योः–
4. जुहुयात्–
5. संछिन्द्यात्–
6. समर्पयेत्–

बृहद्वातुले

## सप्तरात्रविधिः

—o—

शृणु वक्ष्ये चमूनाथ! सप्तरात्रान्वितं क्रमात् ।
क्रियारम्भदिनात्पूर्वं गेहस्याग्रे गुरूत्तमः ॥ १ ॥

यागार्थं मण्टपं कृत्वा अष्टहस्तप्रमाणतः ।
तत्त्रिभागैकभागेन तन्मध्ये वेदिको [1] भवेत् ॥ २ ॥

परितः सप्तकुण्डानि कुण्डशास्त्रोक्तवत्सुधीः ।
चतुरश्रं चतुर्दिक्षु सुवृतं [2] शङ्करेन्द्रयोः ॥ ३ ॥

हुताशनेन्द्रयोश्चैकं वृत्तकुण्डं शिखिध्वज ।
प्रधानं वेदिकामध्ये वृत्तं वा चतुरश्रकम् ॥ ४ ॥

योनिनाभिसमायुक्तमुक्तलक्षणसंयुतम् ।
द्वारतोरणभूषादि सर्वमुक्तवदाचरेत् ॥ ५ ॥

द्विजानां [3] ह्वापयेत्पश्चात्कर्मज्ञान् नैष्ठिकान्वितान् ।
ततः प्रातः समुत्थाय तैस्सार्थं [4] स्नानमाचरेत् ॥ ६ ॥

नित्यकर्म विधायाथ देवं सम्प्रार्थ्य भक्तितः ।
देशिको यजमानश्च ब्रह्मा षड्ढोतृकास्तथा [5] ॥ ७ ॥

---

1. वेदिका–
2. सुवृत्तं–
3. द्विजान्–
4. तैस्सार्धं -
5. षड्ढोतृकास्तथा–

सर्वाङ्गं वचनं[1] कुर्युः सदस्यान्तजना इमे ।
नदीं गत्वाऽथ सुस्नात्वा[2] मृत्तिकास्नानपूर्वकम् ॥ ८ ॥

ततो देवालयं गत्वा स्वस्तिवाचनपूर्वकम् ।
गणेशं पूजयेत्पश्चात्स्वर्णपुष्पादिकैः फलैः ॥ ९ ॥

ततः सङ्कल्प्य कर्मार्थं नान्दीपुण्याहमाचरेत् ।
विप्रमुख्यांश्च वरयेद्वस्त्रहेमाङ्गुलीयकैः ॥ १० ॥

मधुपर्कं ततः कृत्वा तन्मन्त्रेणैव देशिकः ।
मृदमानीय तन्मन्त्रैर्वेदिकामध्यमे न्यसेत् ॥ ११ ॥

नित्यार्चनं ततो नीत्वा ब्राह्मणान् भोजयेत्ततः ।
तद्रात्रौ वाचयेन्नान्दीं सुपुण्याहं मनूत्तमः ॥ १२ ॥

संस्कृतिं मण्टपस्योक्तविधिवन्मान्त्रिकः क्रमात् ।
पुनर्बीजानि वपयेत्ततः पुण्याहपूर्वकम् ॥ १३ ॥

द्वारकुम्भांश्च सम्पूज्य तोरणादिसरज्जुकान् ।
राक्षोघ्नं होमयेदादौ[3] वास्तुहोमं ततः परम् ॥ १४ ॥

बलिं वास्तोश्च विकिरेद्रक्षाबन्धं प्रकल्पयेत् ।
तण्डुलाढ्यं जलाढ्यं च होमादौ पूजयेत्ततः ॥ १५ ॥

वक्ष्यमाणविधानेन सङ्कोचं कर्म कारयेत् ।
नालशुद्ध्यादिकं पश्चाद्द्वारमाच्छादयेत्ततः ॥ १६ ॥

---

1. वपनं–
2. सुस्नाय–
3. जुहुयादादौ–

विनिद्रां विधिवत्कृत्वा पुनः प्रातस्समुत्थितः ।
नित्यकर्म निर्वृत्याथ घटिकापात्रमर्चयेत् ॥ १७ ॥

खननादीनि कर्माणि ततः क्षालनमुच्यते ।
स्थानशुद्धिं बिम्बशुद्धिं प्रासादमङ्गवैकलम् (?) ॥ १८ ॥

कृत्वा देवस्य पुरतो वृषयागं ततः परम् ।
ध्वजमारोप्य विधिवद्दिक्पालान् बन्धयेत्पुनः ॥ १९ ॥

ध्वजं च दिक्पटैस्सार्धं मण्टपाग्रे न्यसेत्ततः ।
वेदिकायां ततः पश्चाद्यष्ट्वा[1] च शिववर्धनीम् ॥ २० ॥

विघ्नेशान् पूजयेदष्ट सप्त ब्रह्मघटान् यजेत् ।
नवग्रहघटान् सप्त कलावृद्धिघटांस्तथा ॥ २१ ॥

दिग्घटान् दश सम्पूर्य सप्त कुण्डघटान् यजेत् ।
प्रायश्चित्तघटान् सप्त पञ्च शान्तिघटान् पुनः ॥ २२ ॥

सुमुहूर्ते च सम्प्राप्ते बन्धं सम्पूज्य मूलतः ।
तद्बन्धं स्थापयेत्पश्चान्मन्दिरं स्वस्तिवाचनैः ॥ २३ ॥

विन्यसेद्देवसामीप्ये शक्तिमन्त्रैः समर्चयेत् ।
मूलमन्त्रेण तद्बन्धं बन्धयेत्सुदृढं ततः ॥ २४ ॥

लिङ्गस्य परितो नालमूर्ध्वतो व्यालवद्गुरुः ।
बन्धयित्वाऽथ वस्त्राभ्यां लिङ्गं पीठं च सुव्रत ॥ २५ ॥

वेष्ट्य[2] सम्पूज्य तन्मन्त्रैः संहारोक्तक्रमेण तु ।
शक्तितत्त्वं च देवाग्रे हुत्वा तच्छेषमर्चयेत् ॥ २६ ॥

---

1. पश्चादिष्ट्वा-
2. संवेष्ट्य-

देशिकोऽग्निं समानीय पञ्चवाद्यरवैस्सह ।
कुण्डयोनौ न्यसेदग्निं विधिवज्जनयेत्पुनः ॥ २७ ॥

होत्रिभि[1]र्वेदघोषाद्यैः चतुर्भिश्चास्त्रमन्त्रकैः ।
पञ्चभिर्गुरुमन्त्राद्यैः नानासूक्तादिकैस्सह ॥ २८ ॥

ग्रहमन्त्रैर्ब्रह्ममन्त्रैर्दिशानाथाणुभिस्सह ।
यागेन मूलमन्त्रेण सर्वमन्त्रजपैस्सह ॥ २९ ॥

होमकर्म प्रकर्तव्यं मन्त्रपूजादिकैर्गुरुः ॥ ३० ॥

इति सप्तरात्रविधिः ॥

---

1. होतृभि-

—o—

## नवरात्ररथोत्सवकर्मविवृतिविधानम्

—o—

अथ नवरात्रविधिप्रारम्भः—

विस्तरादथ वक्ष्यामि नवरात्रात्मिकां क्रियाम् ।
कर्तव्यं मण्टपं चादौ पञ्चविंशतिहस्तकैः ॥ १ ॥

तत्त्रिधा भज्य [1] मध्यांशं [2] वेदिकां च मनोहरम् ।
कुर्वीत नव कुण्डानि वेदिकापरितो गुरुः ॥ २ ॥

विधिवद्वर्तयेद्भक्त्या मेखलाभिस्त्रिभिस्सह [3] ।
चतुरश्रं तु पूर्वायामाग्नेयां [4] तु भगाकृतिः [5] ॥ ३ ॥

अर्धचन्द्रं तु याम्य यां निर्ऋत्यां [6] तु त्रिकोणकम् ।
वारुणे वर्तुलं कुण्डं षट्कोणं चैव वायवे ॥ ४ ॥

पद्मकुण्डं तु सौम्यायामीशाने त्वष्टकोष्टकम् ।
इन्द्रशङ्करयोर्मध्ये वृत्तकुण्डं प्रधानकम् ॥ ५ ॥

द्वाराणि तोरणादीनि कुण्डहोमानि सुव्रत ।
मण्टपं मण्टपस्योक्तवत्कुर्याद्भूसुरों ततः [7] ॥ ६ ॥

---

1. विभज्य–
2. मध्येंऽशं–
3. स्तिसृभिस्सह–
4. माग्नेय्यां–
5. भगाकृतिम्–
6. निर्ऋत्यां–
7. द्भूसुरांस्ततः–

विप्तहीनांश्च कर्मज्ञानाहूय प्रियमानसः ।
नदीं गत्वाऽथ तैस्सार्धं नीत्वा नित्यक्रियां गुरुः ॥ ७ ॥

ब्रह्मा षढोत्रकाश्चैव[1] सदस्यो घनमे पुनः[2] ।
क्षौरकर्म निर्वृत्यादौ सुस्नानं मृत्तिकादिकैः ॥ ८ ॥

स्नात्वा द्विजोत्तमैस्सार्धं फलपक्वैस्सुमोदकैः ।
सुवर्णैश्चापि विघ्नेशं सम्पूज्य गणनायकम् ॥ ९ ॥

नान्दीमुखं च पुण्याहं वाचयित्वाऽथ भूसुरान् ।
सङ्कल्पं[3] वरयेद्विप्रान् मधुपर्कक्रियां ततः ॥ १० ॥

कृच्छ्रं विप्राय शान्ताय दत्त्वा मूलाणुना गुरुः ।
मृदमानीय विधिवद्वेदिकान्तं न्यसेत्परम् ॥ ११ ॥

वृषयागं ध्वजारोपं दिक्पटं मण्टपध्वजम् ।
यागधाम्नि दिशावस्त्रक्रियामुक्तप्रकारतः ॥ १२ ॥

कृत्वा सम्पूज्य देवेशं पुनर्नित्योत्सवक्रियाः ।
समाप्य भोजयेद्विप्रान् तत्सायं स्नानपूर्वकम् ॥ १३ ॥

विनायकं समभ्यर्च्य पुण्याहं चाथ मन्त्रतः ।
विधिवद्विन्यसेत्कुम्भान् द्वारतोरणरज्जुकान् ॥ १४ ॥

पताकाख्यांश्च विघ्नेशान् संज्ञानागशिवानिधौ[4] ।
शिवकुम्भं विधानेन न्यसत्वा[5] संपूज्य पूरयेत् ॥ १५ ॥

---

1. षड्ढोतृकाश्चैव–
2. धनदः पुनः–
3. सङ्कल्प्य–
4. यागसंज्ञाशिवाभिधौ–
5. न्यस्य–

प्रज्ञाभिधान् दिशासंज्ञान् तत्प्रकुम्भान् कलाभिधान् ।
कुण्डाभिधान् तत्त्वघटान् स्थानबिम्बाभिधान् घटान् ॥ १६ ॥

पिण्डिकाख्यां[1] प्रथन्[2] मन्त्री नवसंख्यां[3] प्रपूरयेत् ।
तण्डुलाढ्यजलाढ्यौ च यष्ट्वा[4] रक्षभिधां[5] हुनेत्[6] ॥ १७ ॥

वास्तुहोमं तद्बलिं च विकिरेद्दर्भमालया ।
रक्षार्थं देहपरितो बन्धयेन्मूलमन्त्रतः ॥ १८ ॥

भेरीं सन्ताड्य विधिवत्तद्विधानेन मन्त्रिकः ।
शिवाग्नि[7] जनयेत्तत्र गर्भाधानपुरस्सरम् ॥ १९ ॥

शिबिकामर्चितं मध्ये[8] देवं न्यस्त्वोत्सवं[9] नयेत् ।
वेदघोषैः स्वस्तिवाक्यैर्विविधैर्वाक्यनिः स्वनैः[10] ॥ २० ॥

छत्रजालैर्वीजनाद्यैर्बलिदीपकदम्बकैः ।
चामरैर्धूपधूमाद्यैः पताकाद्यैश्च तोरणैः ॥ २१ ॥

मखाद्यैस्तोत्रपाठाद्यैर्भूमिपादिप्रभूत्तमैः ।
चतुर्वर्णोद्भवं[11] मर्त्यैर्गीतनृत्तैश्च गायकैः ॥ २२ ॥

---

1. पिण्डिकाख्यान्–
2. पृथक्–
3. नवसंख्यान्–
4. इष्ट्वा–
5. रक्षोभिधा–
6. जुहुयात्–
7. शिवाग्निं–
8. अर्चितं शिबिकामध्ये–
9. न्यस्योत्सवं–
10. वाद्यनिःस्वनैः–
11. चतुर्वर्णोद्भवैः–

आयुधोध्यैः [1] गजाश्वाद्यैः पुष्पवृष्टिकदम्बकैः ।
विचित्रवृत्तसंयुक्तैर्ग्रामान्तं धाम शङ्करम् [2] ॥ २३ ॥

परितो मण्टपे पश्चादर्चको विधिना बुधः ।
अस्त्रेशमर्च्य [3] लाङ्गूल[4]फलाद्यैस्ता उपेभिनम् (?) ॥ २४ ॥

धामान्तः प्रविशेदन्ते पूज्य देवं च मूलतः ।
गीतनृत्तादिकैर्गेहे जनो निद्राणि [5] वारयेत् ॥ २५ ॥

जनैस्सहैव तत्प्रातः स्नात्वा नित्यक्रियां गुरुः ।
निर्वर्त्य घटिकार्थाय मानं यष्ट्वा [6] न्यसेत्पुनः ॥ २६ ॥

गणेशं च समर्च्याथ पुण्याहं वाचयेद्गुरुः ।
पूजाबल्युत्सवं नीत्वा यागवेद्यां न्यसेच्छिवम् ॥ २७ ॥

यष्ट्वा [7] द्वारे वेदघोषान् वदेत्कोणे मनून् सुत ।
पञ्चदौवारिकान् मन्त्रान् मूलं यागमनून् ग्रहान् ॥ २८ ॥

ग्रहान् ब्रह्मान् [8] दिशान् मन्त्रान् [9] चतुरस्रमनूनपि ।
परिवारमनून् सूक्तान् मङ्गलान् प्रजपेत्क्रमात् ॥ २९ ॥

---

1. आयुधौघैः–
2. शाङ्करम्–
3. शमभ्यर्च्य–
4. लाङ्गली (=नारिकेल)–
5. निद्रां नि–
6. इष्ट्वा–
7. इष्ट्वा–
8. ब्रह्मान्–
9. दिशामन्त्रान्–

आयुधांश्च तथा पश्चाद्धोतृभिस्सह देशिकः ।
धनदेन सदस्येन ब्रह्मणा सह पावकम् ॥ ३० ॥

विधिवद्भूमये[1]न्मन्त्रैः स कुण्डे शिवनामतः ।
तदग्निं शिवकुण्डेषु न्यस्त्वा[2] चाग्निक्रियां नयेत ॥ ३१ ॥

लिङ्गशुद्धाख्यबिम्बाख्यो[3]यागसंज्ञशिवाभिधम् ।
होमयेच्चरुलाजाद्यैः दशद्रव्यैर्विचक्षणः ॥ ३२ ॥

कलासंङ्ख्यघटान् पश्चाद्वेदिकाग्रे प्रपूर्य च ।
न्यस्त्वा सुधारसान् सर्वान् व्यूहेच्चैव विधानतः ॥ ३३ ॥

पूजासम्पातमर्च्येशं[4] गेहान्तर्वेशयेत्पुनः ।
पञ्चामृतैश्च तैः कुम्भैः स्नापयेत्पूजयेच्छिवम् ॥ ३४ ॥

हविरर्च्य बलिं दद्यादुत्सवं पूर्वमुक्तवत् ।
प्रचार्य[5] पूजयेद्विप्रा[6] तत्सायं स्नानपूर्वकम् ॥ ३५ ॥

नित्य[7] नीत्वा स्वकुण्डे च क्षीरं च त्रटिकं[8] गुरुः ।
मरीचं जीरकं पत्रं कुङ्कुमं रोचनं ततः ॥ ३६ ॥

मूलमन्त्रेण होतव्यं सर्पिषा सह भक्तितः ।
शेषमर्च्य[9] यजेद्देवीं दीपौघान् भ्रामयेत्ततः ॥ ३७ ॥

---

1. वज्जुहुया–
2. न्यस्य–
3. बिम्बाख्य–
4. मभ्यर्च्य–
5. प्राचार्यः–
6. द्विप्रान्–
7. नित्यं–
8. त्रुटिकं (सूक्ष्मैलां)–
9. शेषमभ्यर्च्य–

यन्त्रं मयूरसंज्ञं च भूष्य तस्मिन् यजेच्छिवम् ।
यजेत्पञ्चोपचारैर्नर्तनैः स्तोत्रपाठकैः ॥ ३८ ॥

निद्रा [1] निवारयेल्लोकः प्रातरुत्थाय तत्परम् ।
गुरुर्नित्यक्रियां नीत्वा पूजाबल्युत्सवं ततः ॥ ३९ ॥

निवृत्य वेदिकामध्ये देवं यष्ट्वा [2] द्विजैस्सह ।
होम ब्रह्माभिधामन्त्रैः [3] वोरसंज्ञं त्रियम्बकम् ॥ ४० ॥

हुत्वा तच्छेषमर्च्येशे [4] वेदिकादक्षिणे घटान् ।
कलास्यख्यश्च [5] सम्पूर्य तस्मिन् व्यूहे सुशारसान् [6] ॥ ४१ ॥

यष्ट्वा [7] शिवं च धामान्त गेह्यसिं च [8] सुधारसैः ।
पूजितैस्तैर्घटैः पश्चान्मूलमन्त्रेण धर्मवित् ॥ ४२ ॥

पूजां हविर्बलिं दत्त्वा चोत्सवं पूर्वमुक्तवत् ।
शुचियु [9] क्षपयावेद्यैः [10] स्वकुण्डे मनुवित्तमः ॥ ४३ ॥

गुप्ततो मूलमन्त्रेण त्रटिकाद्यै [11] र्यथोक्तवत् ।
हुत्वा देवं समभ्यर्च्य यागपङ्क्ते तु देवताम् ॥ ४४ ॥

---

1. निद्रां-
2. इष्ट्वा- .
3. मिधैर्मन्त्रैः-
4. मभ्यर्च्येशं-
5. कलासंख्यांश्च-
6. सुधारसान्-
7. इष्ट्वा-
8. धामान्तर्गेहं सित्त्वा-
9. शुचियुक्-
10. वेदैः-
11. त्रुटिकाद्यै-

डोलायां समये कृत्य[1] शोधयित्वा यजेच्छिवम् ।
बल्युत्सवं पर्यटीकृत्वा[2] मण्टपे च शिवार्चनम् ॥ ४५ ॥

अस्त्रं चार्च्य[3] क्रमप्रोक्तवत् कृत्वाऽथ दिगन्तरम् ।
प्रविशेच्चैव गेहान्तः यजेत्पञ्चोपचारकैः ॥ ४६ ॥

विनिद्रां विधिवन्मर्त्य[4] नीत्वा तत्प्रातरं[5] गुरुः ।
स्नात्वा निर्वर्त्य नित्यानि घटिकागणनाभिधः[6] ॥ ४७ ॥

वाचयित्वाऽथ पुण्याहं पूजाबल्युत्सवक्रियाम् ।
समाप्येशं यागमध्ये यष्ट्वा[7] होमं द्विजैस्सह ॥ ४८ ॥

दिशाहोमांश्च गायत्रीसंज्ञं[8] कृत्वा शिवे ततः ।
समर्च्य हुतशेषं च वेदिकापश्चिमे घटान् ॥ ४९ ॥

कलासङ्ख्या[9] घटान् पञ्च पूर्य पूज्याथ[10] कर्मवित् ।
पश्चाद्विशेच्च गेहान्तः देवं स्नाप्य[11] सुधारसैः ॥ ५० ॥

---

1. कृत्वा–
2. पर्यस्य–
3. चाभ्यर्च्य–
4. न्मर्त्यः–
5. तत्प्रातः–
6. गणनाबुधः–
7. इष्ट्वा–
8. गायत्रीसंज्ञान्–
9. कलासंख्यान्–
10. पञ्चापूर्यसंपूज्याथ–
11. संस्नाप्य–

कुम्भे संसिञ्चय[1] सम्पूज्य हविर्दत्वा बलिं हरेत् ।
उत्सवं चोक्तवत्पूर्वं भोजयेद्भूसुरान् बहून् ॥ ५१ ॥

सन्ध्याकर्म निवृत्याच्यैः[2] तद्रात्रौ शुचियुक् ततः ।
उक्तद्रव्यैर्हुते कुण्डे चोत्सवं त्रटिकादिकैः[3] ॥ ५२ ॥

शिवं यष्ट्वा[4]ऽथ यागेशं ध्वजं चैव हविर्ददेत्[5] ।
दीपजालैः परिभ्राम्य भूतानाहूय निःस्वनैः ॥ ५३ ॥

बलिं दत्त्वा परं मन्त्री अश्वयन्त्रे शिवं यजेत् ।
उत्सवं चोत्सवं पूर्वमल्लेशार्चां विधानतः ॥ ५४ ॥

नीत्वा देवं च धामान्तः वेशयित्वा समर्चयेत् ।
गीतनर्तनहासाद्यैर्विनिद्राकर्म कारयेत् ॥ ५५ ॥

नित्यकर्म पुनः प्रातः समुत्थाय द्विजैस्सह ।
निर्वृत्य घटिकामानं स्वस्वदेवं यजेत् पुनः ॥ ५६ ॥

बल्युत्सवं समाप्येशं यागभूमौ च मध्यमे ।
स्तुत्वा यष्ट्वा[6] द्विजैस्सार्धं होमये[7]द्धोतृभिस्सह ॥ ५७ ॥

ब्रह्माभिधं फलं संज्ञं[8] ग्रहमङ्गलसंज्ञकम् ।
होमं हुत्वा तदन्ते च तच्छेषं चार्चयेत्प्रभो[9] ॥ ५८ ॥

---

1. संसिच्य–
2. निर्वृत्याभ्यर्च्य–
3. त्रुटिकादिकैः–
4. इष्ट्वाथ–
5. हविर्दद्यात्–
6. इष्ट्वा–
7. जुहुया–
8. फलसंज्ञं–
9. प्रभुः–

वेदिकादक्षिणे देशे नवकुम्भान् सुधारसान् ।
यष्ट्वा[1] च विधिना देवं मूलपीठे निवेश्य च ॥ ५९ ॥

सुधाभिः स्वैर्घटैः पश्चात्सेच्य[2] सम्पूज्य भक्तितः ।
सोपचारादि[3]नैवेद्यमपि पञ्च निवेदयेत् ॥ ६० ॥

भ्रामयित्वा च दीप्तौघै[4] बलिदानमथोत्सवम् ।
समाप्य भोजयेद्विप्रान् तद्रात्रौ शुचियुग्गुरुः ॥ ६१ ॥

होमये[5]दुक्तवत्पूर्वं स्वकुण्डे मूलमन्त्रतः ।
सम्पातमर्च्य[6] सम्पूज्य उक्तद्रव्यैर्मरीचकैः ॥ ६२ ॥

बल्युत्सवं स्वनामाद्यैर्वाद्यमङ्गलनिः स्वनैः ।
वृषयन्त्रे समारोप्य देवं सम्पूज्य भक्तितः ॥ ६३ ॥

भूसुराद्यैर्भक्तिजनै[7]रुत्सवं ग्राम[8] पर्यटन् ।
पुनरश्लेशपूर्वान्तं[9] पूर्वमुक्तवदाचरेत् ॥ ६४ ॥

अन्तः प्रविश्य[10] देवेशं प्रसन्नार्चां समाप्य च ।
निर्वर्त्य भूसुरैस्सार्धं ततो जागरणक्रियाम् ॥ ६५ ॥

---

1. इष्ट्वा–
2. त्सिक्त्वा–
3. सूपशाखादि–
4. दीपोघैः–
5. जुहुया–
6. मभ्यर्च्य–
7. र्भक्तजनै–
8. ग्रामं–
9. पूजान्तं–
10. प्रवेश्य–

नीत्वा तस्मादुषःकाले गुरुरुत्थाय भक्तितः ।
घटितार्थाय तत्पात्रं न्यस्त्वा [1] चार्चेन्महात्मभिः ॥ ६६ ॥

द्विजैस्सार्धं च पुण्याहं वाचयित्वा गुरुः स्वयम् ।
पूजाबलिं निर्वर्त्येशं यागधाम प्रवेश्य च ॥ ६७ ॥

यष्ट्वा [2] च वेदिकामध्ये वेदविद्भिश्च मन्त्रिकैः ।
होतृभिस्सह कर्तव्यं होमकर्म विचक्षणः ॥ ६८ ॥

ब्रह्माभिधं दशाहोम[3]मायुधाख्यं हुनेत्ततः [4] ।
तच्छेषमर्चयेद्देवं होमकर्म समाप्य च ॥ ६९ ॥

वेदिकापश्चिमे देशे ग्रहसङ्ख्यान् घटांस्ततः ।
तद्घटान् पूजयित्वा तु क्षीरादिरसपञ्चकम् ॥ ७० ॥

स्वर्च्य बेरं प्रविश्यान्तस्सिञ्चेत्पञ्चामृतैः शिवम् ।
नवभिस्तैर्घटैः स्नात्वा [5] पूजयेदुक्तमार्गतः ॥ ७१ ॥

वाद्यघोषैर्भक्तजनैर्बलिदानमथोत्सवम् ।
समाप्य भोजयेद्विप्रान् तद्रात्रौ देशिकश्शुचिः ॥ ७२ ॥

होमये[6]दुक्तवत्पूर्वं स्वकुण्डे मूलमन्त्रतः ।
सम्पातमर्च्य [7] सम्पूज्य देवं यष्ट्वा [8] ध्वजेश्वरम् ॥ ७३ ॥

---

1. न्यस्य-
2. इष्ट्वा-
3. दिशाहोमं-
4. जुहुयात्ततः-
5. स्नापयित्वा-
6. जुहुया-
7. तमभ्यर्च्य-
8. इष्ट्वा-

बल्युत्सवं स्वनामाद्यैः वाद्यमङ्गलनिःस्वनैः ।
सिंहयन्त्रे समारोप्य देवं सम्पूज्य भक्तितः ॥ ७४ ॥

भूसुरौघैर्भक्तजनैरुत्सवं ग्राम[1] पर्यटन् ।
पुनरस्त्रेशपूजान्तं पूर्वमुक्तवदाचरेत् ॥ ७५ ॥

अन्तः प्रविश्य[2] देवेशं प्रसन्नार्चां समाप्य च ।
निर्वर्त्य भूसुरैस्सार्धं ततो जागरणक्रियाम् ॥ ७६ ॥

नीत्वा तस्मादुषःकाले गुरुरुत्थाय भक्तितः ।
घटितार्थाय तत्पात्रं सप्ताचार्यसमात्मजम्[3] ॥ ७७ ॥

द्विजैस्सार्धं च पुण्याहं वाचयित्वा गुरुः स्वयम् ।
पूजाबलिं निर्वर्त्येशं यागधाम प्रवेश्य च ॥ ७८ ॥

यष्ट्वा[4] तु वेदिकामध्ये वेदविद्भिश्च मान्त्रिकैः ।
होतृभिस्सह कर्तव्यं होमकर्म विचक्षणः ॥ ७९ ॥

ब्रह्माभिधं चास्त्रहोमं यागेशं शक्तिसंज्ञकम् ।
शेषं समाप्य[5] मूलेन वेदिका[6] चोत्तरे ततः ॥ ८० ॥

ग्रहसंख्यान् घटान् पूजान्[7] क्षीरादिरसपञ्चकम् ।
सूर्य[8]बेरं प्रविश्यान्तः सिञ्चेत्पञ्चामृतैस्सह ॥ ८१ ॥

---

1. ग्रामं-
2. प्रवेश्य-
3. न्यस्याचार्यैर्महात्मभिः-
4. इष्ट्वा-
5. समर्च्य-
6. वेदिकायाः
7. सम्पूज्य-
8. स्वर्च्य-

नवभिस्तैर्घटैः स्नत्वा[1] पूजयेदुक्तमार्गतः ।
सूपशाखादिनैवेद्यमपि पञ्च निवेदयेत् ॥ ८२ ॥

भ्रामयित्वाऽथ दीपौघैः समिदानमथोत्सवः[2] ।
समाप्य भोजयेद्विप्रान् तद्रात्रौ देशिकश्शुचिः ॥ ८३ ॥

होमये[3]दुक्तवत्पूर्वं स्वकुण्डे मूलमन्त्रतः ।
सम्पातमर्च्य[4] सम्पूज्य रथसंज्ञं रथं पुनः ॥ ८४ ॥

संस्कृत्य होम[5] तन्मन्त्रैरुक्तवच्चाधिवासयेत् ।
बल्युत्सवं स्वनामाद्यैः वाद्यमङ्गलनिःस्वनैः ॥ ८५ ॥

वृषयन्त्रे समारोप्य देवं सम्पूज्य भक्तितः ।
भूसुरोघै[6]र्भक्तजनैरुत्सवं ग्राम[7] पर्यटन् ॥ ८६ ॥

पुनरस्त्रेशपूजान्तं पूर्वमुक्तवदाचरेत् ।
अन्तः प्रविश्य[8] देवेशं प्रसन्नार्चां समाप्य च ॥ ८७ ॥

निर्वर्त्य भूसुरैस्सार्धं ततो जागरणक्रियाम् ।
अष्टमे दिवसे प्रातः गुरुरुत्थाय भक्तितः ॥ ८८ ॥

---

1. स्नापयित्वा–
2. बलिदानमथोत्सवम्–
3. जुहुया–
4. मभ्यर्च्य–
5. होमं–
6. भूसुरौघैः–
7. ग्रासं–
8. प्रवेश्य–

घटिकार्थाय तत्पात्रं न्यस्त्वाचार्यं ममात्मजम्[1] ।
द्विजैस्सार्धं च पुण्याहं वाचयित्वा गुरुः स्वयम् ॥ ८९ ॥

पूजाबलिं निर्वर्त्येशं यागधाम प्रवेश्य च ।
यष्ट्वा[2] तु वेदिकामध्ये वेदविद्भिश्च मान्त्रिकैः ॥ ९० ॥

समिदाज्यचरून् लाजान् सर्षपांश्च तिलान् यवान् ।
सक्तून् व्रीहीन् पुनश्चाज्यं दशद्रव्यैश्च होमयेत्[3] ॥ ९१ ॥

तत्त्वाभिधं शक्तिसंज्ञं परिवारकलाभिधौ ।
रथसंज्ञां[4] हुने[5]न्मन्त्री स्वकुण्डादिषु वै क्रमात् ॥ ९२ ॥

शेषं समाप्य[6] मूलेन वेदिकेशानभागतः ।
ग्रहसङ्ख्यघटान् पूज्य[7] क्षीरादिरसपञ्चकैः[8] ॥ ९३ ॥

स्वर्च्य बेरं प्रविश्यान्तः सिञ्चेत्पञ्चामृतैश्शिवम् ।
नवभिस्तैर्घटैः स्नात्वा[9] पूजयेदुक्तमार्गतः ॥ ९४ ॥

वाद्यघोषैर्भक्तजनैर्नानाविभवसंयुतैः ।
स्वनामभिर्बलिं दत्वा मुष्टिना विकिरेद्धविः ॥ ९५ ॥

---

1. न्यस्यचार्चेन्महात्मभिः–
2. इष्ट्वा–
3. जुहुयात्–
4. रथसंज्ञं–
5. जुहुया–
6. समाप्य–
7. सम्पूज्य–
8. पञ्चकं–
9. स्नापयित्वा–

चण्डादीनां बलीनां च [1] दण्डाकारबलिं हरेत् ।
रथं मूलं समाश्रित्य पूज्य [2] सर्वाङ्गसुन्दरम् ॥ ९६ ॥

गुरुः कुर्याद्रथेशस्य दिग्विदिक्ष्वन्नपूर्वकम् ।
निशारससमायुक्तं कदलीपक्वसंयुतम् ॥ ९७ ॥

दीपजालैश्च कूष्माण्डशकलैस्संयुतं पुनः ।
जपासक्तैश्च [3] संयुक्तं भूसुरानर्चयेत्परम् ॥ ९८ ॥

वेदघोषै[श्च] सन्नादैः पञ्चवाद्यरवैस्सह ।
चक्रमन्त्रैश्चाङ्गमन्त्रैः परितश्च बलिं हरेत् ॥ ९९ ॥

पञ्चप्रदक्षिणं कृत्वा कृत्वाऽथ रथपुङ्गवम् ।
प्रार्थ्य मन्त्रैश्च सद्भक्त्या वक्ष्यमाणेन सुव्रत ॥ १०० ॥

नमो मेरुसमाकार नमो द्वादशचक्रिणे ।
रथनाम रथश्रेष्ठ सर्वाभरणभूषित ॥ १०१ ॥

तवानुज्ञां [4] देहि देव शम्भुमारोपितं त्वया [5] ।
प्रार्थयित्वा च मेर्वाख्यं पञ्चवारं [6] मनूत्तमः ॥ १०२ ॥

देवमारोपयेन्मध्ये देशिकं बेरवाहिकम् [7] ।
सदस्यहोतृकान् मन्त्रबोधकान् घोषकान् पुनः ॥ १०३ ॥

---

1. बलींश्च–
2. सम्पूज्य–
3. जपापुष्पैश्च–
4. जपापुष्पैः–
5. मारोपयितुं त्वयि–
6. पञ्चवारं–
7. बेरवाहकं–

पृथक्पञ्चजनाश्चैतान्[1] रथसंज्ञे निवेशयेत् ।
रथमूलं समासाद्य रथहोमादिकैः पृथक् ॥ १०४ ॥

विकिरेत्परितः पश्चाज्जयघोषैर्नयेद्रथम् ।
ब्रह्मघोषैः कम्बुनादैर्गीतिनृत्तैश्च पाठकैः ॥ १०५ ॥

प्रभूत्तमैर्नृपाद्यैश्च सर्ववाद्यरवैस्सह ।
विविधैर्विभवैस्सार्धं सुमेरोश्च रथं सुत ॥ १०६ ॥

ग्रामान्तं गेह[2] परितो नीत्वा भक्तजनैस्सह ।
मूलस्थानं नयेत्स्कन्द रथाद्देवं ततः परम् ॥ १०७ ॥

स्वस्तियुक्तैश्चावरोह्य[3] देशिकादिजनैस्सह ।
ततो गच्छन् मृगं हन्तुमुक्तवन्मण्टपे शिवम् ॥ १०८ ॥

समर्प्य[4] कुङ्कुमाद्यैश्च रथैस्सेव्यास्वपं[5] यजेत् ।
मूले निवेद्य देवेशं प्रसन्नार्ध्यार्चनं सुमैः ॥ १०९ ॥

गुरुः पूर्वोक्तमार्गेण दत्त्वा भूतबलिं हरेत् ।
क्षेत्रे समर्प्य[6] तन्मन्त्रैः शङ्खकाहलनिः स्वनैः ॥ ११० ॥

निर्वर्त्य वाद्यघोषैश्च विनिद्रांश्च[7] सुतोत्तम ।
तत्पटे[8] प्रातरुत्थाय गुरुर्नित्यक्रियां पुनः ॥ १११ ॥

---

1. जनांश्चैतान्–
2. गेहं–
3. श्चावरोप्य–
4. समर्च्य–
5. रथैस्संसेव्यास्वपं–
6. समर्च्य–
7. विनिद्रं च–
8. तत्परे–

निर्वर्त्य भूसुरैस्सार्धं घटमानं न्यसेत्परम् ।
प्रातर्बल्युत्सवं नीत्वा होमयेन्नवकुण्डेषु[1] ॥ ११२ ॥

प्राणाभिधं (?) प्राणसंज्ञं चूर्णाख्यं शान्तिकाभिधम् ।
प्रायश्चित्तं च होमं च हुत्वा तच्छेसमर्पयेत्[2] ॥ ११३ ॥

वेदिकामध्यभागे तु नवकुम्भान् सम्र्पयेत्[3] ।
सुधारसं तत्समीपे पृथक् पञ्च यजेत्ततः ॥ ११४ ॥

रसैस्तैस्सेचिते[4] कुम्भैः सिञ्चेन्मूलाणुना गुरुः ।
पूजाबलिं चूर्णयागं नीत्वा नद्यां विशेच्छिवम्[5] ॥ ११५ ॥

होतव्यं तत्र यात्रार्थमुक्तद्रव्यैर्विधानवित् ।
स्नात्वा नद्यां तु रुद्रं वा वाद्यघोषैर्द्विजैस्सह ॥ ११६ ॥

गेहं प्रविश्य[6] देवं मां मण्टपे च यजेत्तदा ।
पूर्णाहुतिं च कुण्डेषु होतृभिस्सह देशिकः ॥ ११७ ॥

नत्वा[7] दानादि[8] दत्वाऽन्ते गोमह्यादीनि सुव्रत ।
कृच्छ्रं दत्त्वा पटं पश्चादवरोप्यास्त्रमन्त्रतः ॥ ११८ ॥

---

1. नवकुण्डेषु जुहुयात्–
2. मर्चयेत्–
3. समर्चयेत्–
4. स्सेचितैः–
5. वेशयेच्छिवम्–
6. प्रवेश्य–
7. नीत्वा–
8. दानानि–

दण्डं छेद्यास्त्रपं यष्ट्वा[1] गेहान्तर्वेशयेच्छिवम् ।
प्रीतियुद्धक्रमं द्वारे नीत्वा मन्त्री विधानतः ॥ ११९ ॥

पूजयेदुक्तवद्देवं शिवं कुम्भादिकैर्जयेत् ।
द्विजेभ्यो दक्षिणां दत्वा प्रभुर्मोहसमन्वितम्[2] ॥ १२० ॥

मान्त्रिकं पूजयेत्पश्चात्तन्त्रोपकरणैस्सह ।
गां महीं द्रविणं रत्नं भूषणानि धनप्रदः ॥ १२१ ॥

दत्त्वा प्रणम्य सन्तोष्य ततो वाद्यरवैस्सह ।
ब्रह्मघोषो[3] जनैस्सर्वैः जयघण्टादिनिः स्वनैः ॥ १२२ ॥

दीपजालैर्मधूप्याद्यैः[4] छत्रचामरसंयुतैः ।
गजवाहरथैस्सार्थं[5] यथाविभवविस्तरैः[6] ॥ १२३ ॥

कुण्डाग्निना सहाभ्यर्च्य विशोदर्यालयं प्रभुः[7] ।
वाद्योघै[8]र्मानिनः सर्वान् विशो तेषां[9] पदं प्रति ॥ १२४ ॥

मध्यमाधमकुम्भैश्च सिञ्चेच्छुद्ध्यर्थमीश्वरम् ।
दैविके[10] कर्म चेत्युक्तं पापजालहरं नृणाम् ॥ १२५ ॥

---

1. इष्ट्वा–
2. प्रभुर्होमसमन्वितम्–
3. ब्रह्मघोषैः–
4. जालैर्धूपदीपैः–
5. स्सार्धं–
6. विस्तरम्–
7. विशेद्देवालयं प्रभुः–
8. वाद्यौघैः–
9. विशेतेषां/वेशयेत्तेषां–
10. दैविकं–

